# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



पौषपूर्णिमा २००८

षष्ठवर्षे तृतीयचतुर्थाङ्कौ

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



पौषपूर्णिमा २००८

षष्ठवर्षे तृतीयचतुर्थाङ्कौ

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः
श्रीत्रिभुवनप्रसाद उपाध्यायः
एम० ए०, व्याकरणाचार्यः

सहायकसम्पादकः
श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः

पौषपूर्णिमा २००८

षष्ठवर्षे तृतीयचतुर्थाङ्कौ

# विषयसूची


| स्तम्भाः | विषयाः | लेखकाः | पृष्ठसंख्याः |
|---|---|---|---|
| | श्रुतिनिकणः | | २४३ |
| | प्रतिपच्चन्द्रः | —श्रीआनन्दझा न्यायाचार्यः। | २४४ |
| शास्त्रनिबन्धः— | | | |
| | ऐतरेयारण्यकपर्यालोचनम् | —डा. मङ्गलदेवशास्त्री एम. ए., डी. फिल्. | २४५ |
| | अभिधर्मवस्तुकथा | —भदन्तशान्तिभिक्षुः शान्तिनिकेतनस्थ पालिविभागाध्यापकः। | २५३ |
| | रसविमर्शः | —म. म. श्रीनारायणशास्त्रिखिस्ते साहित्याचार्यः। | २६६ |
| | व्यञ्जनाविलासः | —श्रीमुकुन्दशास्त्रिखिस्ते साहित्याचार्यः, का. रा. सं. साहित्याध्यापकः। | २६९ |
| | ध्वनिरात्मा काव्यस्य | —कुमारीभक्तिसुधादेवी एम. ए. काशीविश्वविद्यालयेऽनुसन्धानकार्ये व्यापृता। | २७३ |
| गद्यकाव्यम्— | | | |
| | कल्पनाविलासः | —श्रीमहादेवशास्त्रिपाण्डेयः साहित्याचार्यः, काशीविश्वविद्यालये साहित्यप्रधानाध्यापकः। | २७७ |
| | हैमसमाधिः | —सौ० क्षमाबाईराव, बम्बई। | २८० |

| स्तम्भाः | विषयाः | लेखकाः | पृष्ठसंख्याः |
|---|---|---|---|
| **विज्ञाननिबन्धः—** | | | |
| | भुवश्चलाचलत्वविषये विचारः | —श्रीबलदेवमिश्रो ज्यौतिषाचार्यः। | २६० |
| | विलुप्तसंवत्सरादिकालनिर्णयः | —श्रीसीतारामझा ज्यौतिषाचार्यः संन्यासिसंस्कृतविद्यालये ज्यौतिषाध्यापकः। | ३०६ |
| **राजनीतिः—** | | | |
| | भारतीयानां प्राचीनो व्यवहारदर्शनक्रमः | —डा. सुभद्रझा एम. ए., डी. लिट् साहित्याचार्यः, सरस्वतीभवनपुस्तकालयाध्यक्षः। | ३१५ |
| **संस्कृतिः कला च—** | | | |
| | भारतीयसंस्कृतौ मानवानां स्वव्यक्तित्वविकासे कियानधिकारः | —श्री को. अ. सुब्रह्मण्य अय्यरः, लक्ष्मणपुरविश्वविद्यालये कलाविभागाध्यक्षः। | ३२० |
| | लोकसंस्कृतिविकासाय दर्शनभूमिः | —श्रीजगन्नाथ उपाध्यायो वेदान्ताचार्यः, का. रा. सं. दर्शनाध्यापकः। | ३२७ |
| | प्राचीनं नाट्यशास्त्रम् | —श्रीबलदेव उपाध्यायः एम. ए. साहित्याचार्यः, काशीविश्वविद्यालये संस्कृतप्राध्यापकः। अनु०-श्रीरघुनाथपाण्डेयः। | ३३३ |
| **समालोचनम्—** | | | |
| | अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम् | —डा. वासुदेवशरणोऽग्रवालः, काशीविश्वविद्यालये भारतीविभागप्राध्यापकः। | ३३६ |

## सारस्वती सुषमा


स्तम्भाः　विषयाः　लेखकाः　पृष्ठसंख्याः

गीर्वाणवाण्या गौरवम् —श्रीत्रिभुवनप्रसाद उपाध्यायः एम. ए. व्याकरणाचार्यः, का०रा०सं०महाविद्यालयाध्यक्षः। ३४४

वाल्मीकीयादिकाण्डरहस्यम् —श्रीरामाज्ञापाण्डेयो व्याकरणाचार्यः, उत्तरप्रदेशीयशासनेन व्याकरणदर्शनानुसन्धाने नियुक्तः। ३५२

अष्टाध्यायीप्रकरणक्रमालोचनम् —श्रीरामशङ्करभट्टाचार्यः, का०रा०सं०महाविद्यालयसदस्यः। ३६४

संस्कृतज्ञैरद्य किं कार्यम् —श्रीप्रकाशचन्द्रगौडः एम. ए. व्याकरणाचार्यः, उत्तरप्रदेशीयसं०पाठशालोपनिरीक्षकः। ३८०

संस्कृतपाठशालानां दशा —श्रीमुरलीधर उपाध्यायः एम. ए. व्याकरणाचार्यः, उत्तरप्रदेशीयसं०पाठशालोपनिरीक्षकः। ३८४

सम्पादकीयम्—

संस्कृतपरीक्षाणां मान्यताघोषणा ३८६

पारसीकदेशे संस्कृताध्ययनस्यापूर्वः समारम्भः ३८६

प्राच्यविद्यामहासंमेलनम् ३९१

मिथिलामगधविद्यापीठयोः स्थापना ३९४

विविधम्—

काशिकराजकीयसंस्कृतमहाविद्यालयाध्यापकानां प्राचीनं निर्णयपत्रम् ३९६

अस्माकमीक्षणम् ३९८

संस्कृतसमाचाराः ४००

वार्षिकविषयसूची ४०५


---

# लेखकेभ्यो निवेदनम्

पत्रिकेयं प्रतिवर्षं चैत्राषाढाश्विनपौषपूर्णिमासु सरस्वतीभवनात् प्राकाश्यमेति।

अस्याः खलु सरस्वतीभवनस्थैर्विद्वद्भिर्विद्यालयीयाध्यापकैरन्यैश्च स्वोपज्ञविचारविचारकैर्निबद्धानामनुसन्धानमूलकानामन्येषां चोपयोगिनां निबन्धानां प्रकाशनेन संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः सम्यगालोचनाप्रवृत्तेश्चोत्पादनं प्रोत्साहनं चैव मुख्यमुद्देश्यम्।

उपरिनिर्दिष्टप्रकारका एव निबन्धा अत्र प्रकाशिताः स्युः।

फुलस्केपपरिमितेषु पत्रेष्वेकस्मिन् पार्श्वे एव पर्याप्तं रिक्तं स्थानं (मार्जिन) दत्त्वा सुस्पष्टं शोभनाक्षरैर्लिखिता एव निबन्धाः पत्रिकायां प्रकाशनार्थं स्वीकृताः स्युः।

पूर्वाङ्कप्रकाशनानुकालमेव समागता निबन्धा एवाग्रिमाङ्के प्राकाश्यमर्हेयुः।

निबन्धाश्च काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षसविधे प्रेषणीयाः।

---

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

६ वर्षः } पौषः २००८ { ३-४ अङ्कौ

### श्रुतिनिक्वणः

यत्ते मध्यं पृथिवि यच्च नभ्यं
यास्त ऊर्जस्तन्वः संबभूवुः ।
तासु नो धेहि अभि नः पवस्व
माता भूमिः पुत्रो अहं पृथिव्याः ॥

[ अथर्ववेद १२।१।१२ ]

# प्रतिपच्चन्द्रः

उद्गतेयं सोमवल्ली
अस्तगिरिशृङ्गे नु किं
पुनरुद्गतेयं सोमवल्ली ?

गगनकाननगे तमःपुञ्जे निकुञ्जे या निलीना ।
प्रत्यहं वृद्धिं व्रजन्ती लोक्यते लोकैर्नवीना ॥
पूर्णपर्वणि पूर्णतामथ या कलाभिः षोडशीभिः ।
प्राप्य मानसमागता प्रतिभाति यद्वदमन्दमल्ली ॥

उद्गतेयं सोमवल्ली
अस्तगिरिशृङ्गे नु किं
पुनरुद्गतेयं सोमवल्ली ?

यत्कलामादाय हव्यत्वेन कालः कोऽपि होता ।
प्रतिदिनं होमं विधत्ते प्रलयबलफलबद्धचेताः ॥
याममृतदिग्धामिमामादाय दर्शे सूर्यवह्नौ ।
साधयति पूर्णाऽऽहुतिं किं नक्तदीप्ता सैव वल्ली ॥

उद्गतेयं सोमवल्ली
अस्तगिरिशृङ्गे नु किं
पुनरुद्गतेयं सोमवल्ली ?

श्रीआनन्दझाः

# श्रुतिविमर्शः

## ऐतरेयारण्यक आचारविचाराः
## अथवा
## ऐतरेयारण्यकपर्यालोचनम्

डाक्टरमङ्गलदेवशास्त्री

दिव्यं यत्परमं धाम ज्योतीरूपं सनातनम् ।
तन्म आविर्भवत्सद्यस्तमो हार्दं विनाशयेत् ॥

सर्वज्ञाननिधेरतिगम्भीरस्य वैदिकवाङ्मयस्य तत्तद्भागक्रमेण विचारणीयविषयानधिकृत्य प्रबन्धमालारूपेण प्रवृत्तस्यास्य श्रुतिविमर्शस्य ऐतरेयपर्यालोचने नाम प्रथमे निबन्धे ऐतरेयारण्यकवर्जमैतरेयब्राह्मणगता रीति-नीति-स्वर्ग-यज्ञस्वरूप-तत्तद्देवतास्वरूप-तत्तत्पदार्थविज्ञानादिविषयका विचाराः स्पष्टीकृताः पूर्वमस्माभिः । अस्मिन् खलु द्वितीये निबन्धे तस्यैव ब्राह्मणस्य—

ऐतरेयब्राह्मणेऽस्ति काण्डमारण्यकाभिधम् ।
अरण्य एव पाठ्यत्वादारण्यकमितीर्यते ॥

इत्येवमुपवर्णितमैतरेयारण्यकाख्यं भागमधिकृत्य विचारः प्रस्तूयते । ऐतरेयारण्यके हि आरण्यकाभिधाः पञ्च भागा विद्यन्ते । तेषां प्रत्येकं विषयविभागः संप्रदायानुसारेणाधः प्रदर्श्यते ।

तत्र गवामयनमित्याख्यस्य संवत्सरात्मकसत्रस्य शेषो महाव्रतनामकं कर्म प्रथमारण्यकस्य विषयः । द्वितीयस्य तृतीयस्य चारण्यकस्य ज्ञानकाण्डं विषयः । सा चोपनिषदित्यभिधीयते । चतुर्थारण्यके[1]ऽरण्याध्ययनार्थाः 'विदा मघवन्' इत्यादयो महानाम्न्याख्यमन्त्राः प्रोच्यन्ते ।



---

१ षड्गुरुशिष्यानुसारेण चतुर्थारण्यकस्य कर्ता आश्वलायनः ।

पञ्चमे त्वारण्यके[1] महाव्रताख्यकर्मण एव प्रयोग उच्यते। तदेवमैतरेयारण्यके प्रथमं चतुर्थं पञ्चमं चारण्यकं कर्मपरम्, द्वितीयं तृतीयं च ज्ञानकाण्डात्मकमित्यवसीयते।

सत्यप्येवम्, प्रस्तुतेऽस्मिन् पर्यालोचने ग्रन्थस्य प्रधानप्रतिपाद्यविषयमपहाय, प्रथमे निबन्ध इव, प्रसङ्गागतास्तदानीन्तनरीतिनीत्यादिपरिचायका विषया एव क्रमेण संगृहीता विमृष्टाश्च नूनं विदुषां मनस्तोषाय ज्ञानवृद्धये च भवेयुरिति त एवात्र संग्रथ्यन्ते।

## ( १ ) वाङ्मनसयोः स्वरूपं महिमा च

"वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥ इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम्। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥" ( काव्यादर्शे १।३-४ ) इत्यादिप्रकारेण वर्णिताया वाचः, "मनो वाव वाचो भूयः" ( छान्दोग्योपनिषदि ७।३।१ ), "वाग्वै मनसो ह्रसीयसी" ( शतपथब्रा० ) इत्येवं वाचोऽपेक्षयापि महीयसो मनसश्च गुणवर्णनाभिर्व्याप्तं हि वैदिकं वाङ्मयम्। तच्च सर्वथा समुचितमेव। वाचो मनसश्चापरिमितशक्तीनां याथार्थिक उपयोगो वै मनुष्यजीवनस्य वास्तविकसफलतायाः सममेव निदानं रहस्यं च। ततश्चास्मिन्नारण्यकेऽपि तयोर्नानारूपेणोपवर्णनं स्वाभाविकमेव। अत्र हि वाग्विषये "वाक् तन्तिः ( = दीर्घा रज्जुः ) नामानि दामानि।···वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् ( = बद्धम् )", "अथ खल्वियं सर्वस्यै वाच उपनिषद्", "अथ खल्वियं दैवी वीणा भवति।···एवमसौ शब्दवती", "अथातो वाग्रसः", "अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति" इत्यादिवर्णनानि विशेषतो विदुषां रुचये भवेयुरिति प्रतीमः। तथाहि—

वाग्व धियावसुः। ( ऐ० आ० १।१।४ )

धियावसुः। बुद्धया सर्वानाच्छादयति, बुद्धिप्रदेत्यर्थः ( सायणः )। अथवा, वाग्द्वारैव मनुष्यः सर्वान् पदार्थान् बुद्धिविषयान् करोतीत्यर्थः।

मनसि वै सर्वे कामाः श्रिताः, मनसा हि सर्वान् कामान् ध्यायति।
····वाग्वै सर्वान् कामान्दुहे, वाचा हि सर्वान् कामान् वदति। (ऐ०आ० १।३।२)

दुहे दुग्धे संपादयति।



१ सायणानुसारेण पञ्चमारण्यकं शौनककर्तृकमित्यवधेयम्।

वाचा हि नामधेयानि धीयन्ते । ( ऐ० आ० १ । ३ । ३ )

वाचो रेतः कर्म । ( ऐ० आ० २ । १ । ३ )

रेतः सारभूतं कार्यम् ।

मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति । ( ऐ० आ० ३ । १ । १ )

यावद् ब्रह्म विष्ठितं तावती वाग् ( ऋ० १० । ११४ । ८ ) इति । यत्र ह क्व च ब्रह्म तद्वाग्, यत्र वा वाक् तद्वा ब्रह्मेत्येतदुक्तं भवति । (ऐ०आ० १ । ३ । ८)

यत्र ह क्व च ब्रह्मण्या वागुद्यते तद्धास्य कीतर्भवति । ( ऐ० आ० १ । ५ । २ )

ब्रह्मण्या वाक् । वेदसम्बन्धि वाक्यम् ( सायणः ) । अस्य यजमानस्य, विदुषो वा ।

...तस्माद्ध सा वाक् समानायतना प्राणैः सत्यननुषक्ता । ( ऐ० आ०१।५।२ )

प्राणैः । शिरश्छिद्रगतैः सप्तभिः प्राणैरित्यर्थः । 'सप्त वै शीर्षन् प्राणाः' इत्यस्य प्रकृतत्वात् । अननुषक्ता असङ्कीर्णा ।

तस्य वाक् तन्तिर्नामानि दामानि । तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् । सर्वं हीदं नामनी ३ । सर्वं व्राचाभिवदति । ( ऐ० आ० २।१।६ )

तस्य प्राणस्य । तन्तिः काचिद्दीर्घा रज्जुः । दामानि दीर्घायां रज्जौ तत्तत्पशुबन्धनार्थाः पाशाः । तथा च, बहुपशुबन्धनार्थायां रज्जौ यथा प्रत्येकं बन्धनाय पृथक् पाशा भवन्ति तथैव वाक्सामान्यरूपायां दीर्घतन्त्यां नामविशेषरूपाणि दामानि सन्ति । तत्तस्मादस्य प्राणस्य सम्बन्धिन्या वाक्सामान्यरूपया दीर्घतन्त्या नामविशेषरूपैर्दामभिः सर्वमिदं जगत् सितं बद्धम् । अत एव रज्जुबन्धनेनाकृष्यमाणमिव तत्तन्नाम्नाभिधीयमानं सर्वं पदार्थजातं मनुष्यस्य पुरस्तादुपतिष्ठत इव ।

सर्वं हीदं नामनी ३ सर्वं वाचाभिवदति । ( ऐ० आ० २।१।६ )

सर्वं जगदभिधेयरूपम् अभिधायके नामनि व्यवस्थितमिति लोकप्रसिद्धमेतत् । अत एव मनुष्यः सर्वमपि वस्तु उद्दिश्य वाचा तत्तन्नाम्ना अभिवदति ।

अकृत्स्नो ह्येष आत्मा यद्वाक् । अभि हि प्राणेन मनसेऽऽस्यमानो वाचा नानुभवति ।

( ऐ० आ० २।३।५ )

अयं भावः—वाचा हि नहि कश्चित् कात्स्न्येंन स्वाभिप्रायमाविष्कर्त्तुं शक्नोति। अत एव प्राणेन मनसेऽस्यमानो विचारप्रवाहे प्रवर्तमानो मनुष्यो वाचा साकल्येन तत्प्रकटीकरणाय न कल्पते।

सत्यं वै वागृचा स्पृष्टा। ( ऐ० आ० २।३।६ )

स्पृष्टा संयुक्ता।

अकारो वै सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति। तस्यै यदुपांशु स प्राणः, अथ यदुच्चैस्तच्छरीरम्। तस्मात्तत्तिर इव, तिर इव ह्यशरीरम्, अशरीरो हि प्राणः। अथ यदुच्चैस्तच्छरीरम्, तस्मात्तदाविः, आविर्हि शरीरम्।
( ऐ० आ० २।३।६ )

तस्यै। अकाररूपायास्तस्या वाचः। तिर इव। तिरोहितमिव। आविः। आविर्भूतम्।

वाचा वै वेदाः संधीयन्ते, वाचा छन्दांसि, वाचा मित्राणि संदधति, वाचा सर्वाणि भूतानि, अथो वागेवेदं सर्वमिति। तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक्तदा प्राणं रेळिह। अथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेळिह। तावन्योन्यं रीळ्हः। वाग्वै माता प्राणः पुत्रः।
( ऐ० आ० ३।१।६ )

संधीयन्ते पठ्यन्ते। वाचा छन्दांसि प्रयुज्यन्ते। वाचा प्रियोक्त्या मित्राणि संदधति संयुक्ता भवन्ति। स्निग्धा भवन्तीति भावः। सर्वाणि भूतानि। सर्वेऽपि प्राणिनः। अथो अपि च वागेवेदं सर्वमैहिकामुष्मिकं फलजातं संपादयति। राजसेवादौ प्रियभाषणेन धनलाभात्, मन्त्रजपादिना स्वर्गादिसिद्धेश्च।

अधीते वेदवाक्यम्। भाषते लौकिकीं भाषाम्। रेळिह ग्रसति। रीळ्हः काल-भेदेन ग्रसतः। अयं भावः—वाग्व्यापारे उच्छ्वासनिःश्वासरूपः प्राणव्यापारो न दृश्यते; तदभावे तु प्राणव्यापारो दृश्यते, न वाग्व्यापारः।

( वाच उपनिषद् )

अथ खल्वियं सर्वस्यै वाच उपनिषद्। सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः, इमां त्वेवाचक्षते। पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः। अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वराः। ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः

सामवेदस्य स्वराः। चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः। प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः। (ऐ० आ० ३।२।५)।

उपनिषदुपासना। सर्वस्यै वाचः। अकारादिक्षकारान्तायाः सर्वस्या वाचः।

(दैवी वीणा)

अथ खल्वियं दैवी वीणा भवति; तदनुकृतिरसौ मानुषी वीणा भवति। यथास्याः शिर एवममुष्याः शिरो यथास्या उदरमेवममुष्या अम्भणं यथास्यै जिह्वैवममुष्यै वादनं यथास्यास्तन्त्रय एवममुष्या अङ्गुलयो यथास्या स्वरा एवममुष्याः स्वरा यथास्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणापिहिता भवत्येवमसौ लोमशेन चर्मणापिहिता। लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति। स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्तिर्भवति यत्र क चार्या वाचो भाषन्ते विदुरेनं तत्र। (ऐ० आ० ३।२।५)।

इयम् अस्माभिर्दृश्यमाना शरीररूपा। दैवी देवनिर्मिता। असौ मानुषी वीणा। मनुष्यनिर्मिता गायकैर्धार्यमाणा काष्ठमयी वीणा। अम्भणं वीणादण्डमध्यवर्त्ति मध्यच्छिद्रम्। अमुष्याः शरीरवीणायाः। स्वराः। एकत्र षड्जादयोऽपरत्र अकारादिस्वराः। अथवा उभयत्र षड्जादय एव स्वराः। स्पर्शाः। एकत्र ककारादिव्यञ्जनानि, अपरत्र अङ्गुलिस्पर्शाः। अथवा एकत्र शरीरमध्ये वायोः स्पर्शविशेषाः, अपरत्र अङ्गुलिस्पर्शाः। तर्द्मवती दृढबन्धनयुक्ता। तर्दनं दृढबन्धनम्। तच्चैकत्र शरीरावयवानाम्, अपरत्र तन्त्रीणाम्। लोमशेन प्रभूतरोमाधारेण। अपिहिता आच्छादिता। पुरा पूर्वकाले। श्रुतवदनः सर्वजनश्रोत्रप्रियं वदनमुक्तिर्यस्यासौ। भूमिप्रा भूमेः पूरयित्री।

(वाग्रसः)

अथातो वाग्रसः। यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेत्।

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्॥



इति वाग्रसः। (ऐ० आ० ३। २। ५)

वाग्रसः। वाचः सारभूतो मन्त्रः। न विरुरुचिषेत। विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत्। पविर्वज्रवत्तीक्ष्णा। नकुली। नकुलीव नकुली, अतीव चपला तीक्ष्णा वा जिह्वा। तया च वाग्देवतोपलक्ष्यते।

( वाग्ब्राह्मणम् )

अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति। प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः। स च्छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता। तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा। स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेद; आयुष्यमिति विद्यात्। स यदि विचिकित्सेत् सणकारं ब्रवाणीँ३ अणकाराँ३ इति सणकारमेव ब्रूयात् सषकारं ब्रवाणीँ३ अषकाराँ३ इति सषकारमेव ब्रूयात्। ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः। अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह स्थविरः शाकल्यः। ( ऐ० आ० ३ । २ । ६ )

अस्मै पुत्राय शिष्याय वा। वाग्ब्राह्मणम्। वाग्विषयकं ब्राह्मणं ब्राह्मणवाक्यम्। संवत्सरः प्रजापतिः। कालात्मकः परमेश्वरः ( सायणः )। व्यस्रंसत श्रमेण विस्रस्तावयवोऽभूत्। आत्मानं समदधात्। स्वावयवपाटवं संपादितवानित्यर्थः। तदेतद् आयुष्यमिति विद्यात्। सानुनासिकं प्लुतद्वयं विचारार्थम्। माण्डूकेयीयमध्यायम्। पदपाठक्रमपाठसंहितापाठविषयकं माण्डूकेयेन शूरवीरेण प्रोक्तमस्यैवारण्यकस्य भागविशेषमध्यायम्। प्रब्रूमः पठामः। णकारषकारौ बलप्राणरूपौ।

स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्। तदेतत्पञ्चविधम्—मितममितं स्वरः सत्यानृते इति। ऋग्गाथा कुम्ब्या तन्मितम्, यजुर्निगदो वृथावाक् तदमितम्, सामाथो यः कश्च गेष्णः स स्वरः, ओ३मिति सत्यम्, नेत्यनृतम्।

( ऐ० आ० २ । ३ । ६ । )

महदुक्थं प्रौढं शस्त्रम्। "सर्वलोकप्रसिद्धार्थप्रतिपादिका 'प्रातः प्रातरनृतं ते वदन्ति'
 इत्यादिका गाथा। आचारशिक्षारूपा कुम्ब्या। तद्यथा ब्रह्मचार्यस्यपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीरित्यादि" इति सायणः। "ब्राह्मणगता येऽर्थवादाः, या च राजसभादौ परिहास-

दिरूपेणोच्यते सा सर्वा वृथावाग्'' इति सायणः । ''गेष्णः सामभागः, सामगैः पर्वशब्देन व्यवह्रियमाणः'' इति सायणः ।

ब्रह्म वै हिङ्कारः ।....वृषा वै हिङ्कारो योषर्क्, तन्मिथुनम् । मिथुनमेव तदुक्थमुखे करोति प्रजात्यै ।....यथा वा अभ्रिरेवं ब्रह्मणो हिङ्कारः । यद्वै किञ्चाभ्रियाभितितृत्स-त्यभ्येवैतत् तृणत्त्येवम् । यं कामं कामयते हिङ्कारेणाभ्येवैनं तृणत्ति य एवं वेद । ....वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च यद्धिङ्कारः । स यद्धिङ्कृत्य प्रतिपद्यते वाचमेव तद्व्यावर्तयति दैवीं च मानुषीं च । ( ऐ० आ० १ । ३ । १ )

उक्थमुखे शस्त्रप्रारम्भे । अभ्रिः खननहेतुः काष्ठविशेषः । ब्रह्मणो वेदस्य । हिङ्कारो हि निधिस्थानीयस्य वेदसारस्य खननहेतुः । अभितितृत्सति । सर्वतस्तर्दितुं खनितुमिच्छति । अभितृणत्त्येव । सर्वथा खनत्येव । स्तोत्रशस्त्रादिरूपा वैदिकी वाग्दैवी । अशनाच्छादनादि-विषया लौकिकी वाग्मानुषी । एतस्या द्विविधाया वाचः परस्परव्यावृत्तिहेतुर्हिङ्कारः । स हि दैव्यां वाचि प्रयुज्यते, न तु मानुष्याम् ।

भूर्भुवः स्वरित्येता वाच व्याहृतयः । इमे त्रयो वेदाः । भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदः । ( ऐ० आ० १ । ३ । २ )

एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति । तथैवै-तत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति । (ऐ०आ०१।३।३)

एकाक्षरद्व्यक्षराम् । एकेन ह्रस्वेनाक्षरेणोपेता एकाक्षरा, द्वाभ्यां ह्रस्वदीर्घाभ्यामक्षराभ्या-मुपेता द्व्यक्षरा । ( सायणः )

मूर्धा लोकानामसि वाचो रसस्तेजः प्राणस्यायतनं मनसः । संवेशश्चक्षुषः संभवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वम् ॥ १ ॥ इन्द्रः कर्माक्षितममृतं व्योम ऋतं सत्यं विजिग्यानं विवाचनम् । अन्तो वाचो विभुः सर्वस्मादुत्तरं ज्योतिरूधरप्रतिवादः पूर्वम् ॥ २ ॥ सर्वं वाक्परागर्वाक्सभु सलिलं धेनु पिन्वति चक्षुः श्रोत्रं प्राणः । सत्य-संमितं वाक्प्रभूतं मनसो विभूतं हृदयोग्रं ब्राह्मणमतृकम् ॥ ३ ॥....एतास्त उक्थ भूतय एता वाचो विभूतयः । ताभिर्मे इह भुङ्क्ष्वामृतस्य श्रियं महीम् ॥ ४ ॥ प्रजा-

पतिरिदं ब्रह्म वेदानां ससृजे रसम् । तेनाहं विश्वमाप्यासं सर्वान्कामान्दुह्यं महत् ॥ ५ ॥······ब्रह्म प्रजां मे धुक्ष्व । आयुः प्राणं मे धुक्ष्व । पशून् विशं मे धुक्ष्व । श्रियं यशो मे धुक्ष्व । लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व । ( इति वाचयत्यध्वर्युमबुद्धं चेद्दस्य भवति । ) ( ऐ० आ० ५।३।२ )

निष्केवल्यनामकमुक्थं संबोध्य मन्त्रा इमे पठिताः सन्ति । विजिग्यानं विजयशीलं राजादिकम् , विजयो वा । विवाचनं विशेषेण वक्तुं समर्थम्, विनिर्णयो वा । ऊधो गवां स्तनसमूहः । अप्रतिवादो विद्वत्कथायां प्रतिवाद्युक्तिराहित्यम् । पूर्वं कारणम् । परागर्वाग् उत्तमाधमरूपा या वाक् । सप्रु नानाविधविद्युद्भिः सहितम् । सलिलं वृष्ट्युदकम् । धेनु पिन्वति । यथा धेनुः क्षीरप्रदानेन तद्वत् प्रीणयति । हृदयोग्रं हृदयसम्बन्धि यदुग्रं कर्म । ब्राह्मणभर्तृकं ब्राह्मणाः पोषका यस्य तत् । आप्यासं प्राप्तो भूयासम् । दुह्यां संपादयामि । धुक्ष्व संपादय । इति वाचयतीत्यादि । अस्याध्वर्योरिदं मन्त्रस्वरूपमबुद्धं चेदनवगतं यदि भवति तदा होता पाठयेत् । अवगतत्वे तु स्वयमेव जपेदित्यर्थः ।

## (२) स्वाध्यायधर्मा अध्यापननियमाश्च

विद्या ह वै ब्राह्मणमा जगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ॥

अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीया-
स्तथैव तान्न भुनक्ति श्रुतं तत् ॥ ( निरुक्ते २।४

# अभिधर्मवस्तुकथा

भदन्तशान्तिभिक्षुः

निरूपितं तत्त्वविदाभिधार्मिकै-
यंदीह तत्त्वं गहनं च विस्तरम् ।
करोमि तस्येह निदानसंकथां
परम्परायामवतारणे क्षमाम् ॥

संबोधिमभिसंबुद्धः शाक्यमुनिर्मध्यदेशे पञ्चचत्वारिंशद् वर्षाणि स्थानात् स्थानं चारिकां चरन् तत्र तत्र विहरन् यदा यदा यस्य शिक्षापदस्य कालोऽभवत् तदा तदा तत्तत् शिक्षापदं प्रज्ञप्त-वान्, यस्य यस्य च धर्मस्य यदा यदा देशनीयताऽभवत् तं तं धर्मं तदा तदा देशितवान् । एवं विप्रकीर्णमुपदिष्टानि तथागतप्रवचनानि गुरुशिष्यपरम्परायां मुखान्मुखं प्रवर्तमानानि चिरं तस्थुः । ततः परं बभूवुः स्मृतिदुर्वला गुरुशिष्याः । ते धर्मपर्यायाणां विलोपभयात् तान् लेख-संप्रतिष्ठितान् चक्रुः । दृश्यन्तेऽद्यापि केचन पुराणधर्मपर्यायलेखा अशोकशिलालेखेषु । एवं मुखप्रतिष्ठितानि तथागतप्रवचनानि क्रमेण ग्रन्थप्रतिष्ठितानि संजातानि । तथागतप्रवचनाश्रयेण नवोन्मेषशालिनां परतो ववृधे सौगताचार्याणां ग्रन्थपरम्परा । एवं ग्रन्थाध्ययनाध्यापनपरे सङ्घे सञ्जाते विहारा विद्याकेन्द्रत्वेन परिणताः, संप्रवृद्धः शास्त्रव्यासङ्गः, बहुलीभूतो ग्रन्थराशिः । नालन्दाविश्वविद्यालययुगे तु सर्वं विस्मृत्य सङ्घो ग्रन्थपारमितापरिपूरणायैव बद्धपरिकरोऽभवत् । श्रूयते तत्र च्छात्राणां सहस्राणि न्यूषुः । परतो राजविप्लवयुगे प्रनष्टे सङ्घे नष्टेषु नालन्दादिषु महाविद्यापीठेषु बौद्धग्रन्थराशिर्भारते दुर्लभोऽभवत् । ग्रन्थपठनपाठनपरम्परा तु सर्वथैवोच्छिन्ना । साम्प्रतं नवीक्रियमाणप्राचीनाध्ययनयुगे स्वल्प एव बौद्धग्रन्थराशिरुपलभ्यते । टीकानुटीका-सहितः पालित्रिपिटकः, खण्डितोऽल्पांशतः प्राप्तः संस्कृतपिटकः, सौगताचार्याणामङ्गुलिगण्याः प्रकरणग्रन्था इत्येतावानेव साम्प्रतमस्ति बौद्धग्रन्थविभवः । एवं जातेऽपि, भोटचीनानुवादेषु वर्तते साम्प्रतमपि महान् बौद्धग्रन्थराशिः स्वोद्धारकालमुखापेक्षी । अस्मिन् सर्वस्मिन् बौद्ध- २५२
वाङ्मये बौद्धधर्मदर्शनतत्त्ववादो विविधाभिः पद्धतिभिर्निरूपितो दृश्यते । प्रतिपद्धति सन्ति

बहवो ग्रन्थाः। विविधास्तासु पद्धतिष्वन्यतमास्त्यभिधर्मपद्धतिः। यस्या अध्येतारो भवन्त्याभिधार्मिकाः। आभिधार्मिकाणां तामिमामभिधर्मपद्धतिं प्रस्तोतुं पूर्वमेष मातृकोद्देशः क्रियते—

(१) अभिधर्मस्य विषयः।

(२) अभिधर्मपिटकस्य बुद्धवचनता।

(३) आभिधार्मिकपरम्परायाः प्रामाण्ये तारतम्यविचारः।

(४) अभिधर्मेतिहासे विभाषायाः ( =ज्ञानप्रस्थानमहाटीकायाः ) कथावस्तुप्रकरणस्य च महत्त्वम्।

(५) विभाषायां भदन्तघोषकः।

(६) भदन्तघोषकस्य सर्वास्तिवादः।

(७) सर्वास्तिवादे स्थविरवादे चास्तित्वविषयको भेदः।

(८) सर्वास्तिवादे स्थविरवादे च विज्ञानाश्रयविषयको भेदः।

(९) तत्त्वगणनाया दुरूहत्वम्।

(१०) तत्त्वपरिगणने आभिधार्मिकाणां मूलभूततत्त्वेष्वभेदः।

(११) तत्त्वगणनाविस्तरे संख्याभेदः।

(१२) स्थविराणामष्टाशीतितत्त्वानि।

(१३) सर्वास्तिवादिनां पञ्चसप्ततितत्त्वानि।

(१४) विज्ञानवादिनां शततत्त्वानि।

(१५) तत्त्वपरिगणने वर्गीकरणे च क्रमिकविकासः।

(१६) चैतसिकधर्मगणनायां भेदः।

(१७) चैतसिकगणनाया उपलक्षणत्वम्।

(१८) चित्तस्य विभागः।

(१९) धर्मविश्लेषणस्य प्रयोजनम्।

(२०) धर्मविश्लेषणमुखेन साधनामार्गस्य प्रदिपादनमेवाभिधर्मशास्त्रस्य विषयः।

(२१) अभिधर्मस्य संस्कृते उपलभ्यमानग्रन्थाः।

(२२) भदन्तघोषकस्याभिधर्मामृतम्।



(२३) अभिधर्मामृतस्य विषयसूची।

(२४) अभिधर्मामृतस्य चीनभाषान्तरम्।

(२५) चीनभाषान्तर्गताभिधर्मग्रन्थनिर्देशेनोपसंहारः।

एतासां मातृकाणामुपरिष्टाद् यथाक्रमं व्याख्यानं करिष्यते।

(१) भगवतो धर्मो द्विविधो भवति—आगमोऽधिगमश्च। तत्रागमः पर्याप्तिः=स्वाध्यायः=गुरुशिष्यपरम्परया समाम्नातव्यस्त्रिपिटकः। त्रयः पिटकाः—सूत्रं विनयोऽभिधर्मश्च। अधिगमो नाम बोधिपाक्षिका धर्मा येषां त्रिष्वपि श्रावकयानप्रत्येकबुद्धयानमहायानेषु भावना कर्तव्यतया प्रतिपादितास्ति। तत्र आगमरूपस्य धर्मस्य वक्तारो हि आगमधारकाः। ते यावत्कालं भुवि तिष्ठन्ति तावत्कालं भगवतो धर्मस्य आगमरूपस्य लोकेऽवस्थानं भवति। अधिगमरूपस्य धर्मस्य प्रतिपत्तारः साक्षात्कर्तार एव तस्य धारका भवन्ति। ते चेत् सन्ति, अधिगमधर्मस्य लोकेऽवस्थानं भवति। यदुक्तं कोशे—

सद्धर्मो द्विविधः शास्तुरागमाधिगमात्मकः।
धातारस्तस्य वक्तारः प्रतिपत्तार एव च॥ [ कोश ८। ३९ ] इति।

तत्राधिगमविषयाणां साङ्गोपाङ्गं निरूपणमेवागमस्य प्रयोजनं न त्वन्यत्। अधिगमस्य प्रयोजनं तु क्रमेण भावनाबलेन सर्वक्लेशोपशमरूपस्य निर्वाणस्य साक्षात्कारः। अधिगमधर्मेषु बोधिपाक्षिकरूपेष्वन्यतमं धर्मविचयं निरूपयितुमेव प्रवृत्तेऽभिधर्मपद्धतिः। धर्मविचयो हि क्लेशोपशमद्वारेण भवति जन्ममरणरूपसंसारनिरोधकः। अभिधर्मे प्रतिपिपादयिषितस्यास्य धर्मविचयस्य प्रयोजनमेतदभिसंधायोक्तं कोशे—

धर्माणां प्रविचयमन्तरेण नास्ति
क्लेशानां यत उपशान्तयेऽभ्युपायः।
क्लेशैश्च भ्रमति भवार्णवेऽत्र लोक-
स्तद्धेतोरत उदितः किलैष शास्ता॥ [कोश १।३ ]

(२) कोऽसावभिधर्मपिटकस्य प्रवक्ता? तस्य प्रामाण्यमस्ति न वा? इत्यत्र बौद्धनिकाया मिथो विमता एव दृश्यन्ते। सौत्रान्तिकानां नयेनाभिधर्मपिटको न बुद्धवचनं[1]

---

१ अभिधर्म उपदिष्टः शास्त्रा बुद्धेन। ''''नहि विना धर्मोपदेशेन शिष्यः शक्तो धर्मान् प्रविचयितुमिति। [ १। ३ कोशकारिकायां स्फुटार्थोद्धृतं भाष्यम् ] आभिधार्मिकाणामेतन्मतं न तु'''सौत्रान्तिकानाम्। [इति १।३ कोशकारिकायाः किलशब्दव्याख्याने स्फुटार्था–पृष्ठ ११] 

किन्तु श्रावकवचनम्। तथा चाहुः—"श्रूयन्ते ह्यभिधर्मशास्त्राणां कर्तारः । तद्यथा—ज्ञानप्रस्थानस्यार्यकात्यायनीपुत्रः कर्ता, प्रकरणपादस्य स्थविरवसुमित्रः, विज्ञानकायस्य स्थविरदेवशर्मा, धर्मस्कन्धस्यार्यशारिपुत्रः, प्रज्ञप्तिशास्त्रस्यार्यमौद्गल्यायनः, धातुकायस्य पूरणः, संगीतिपर्यायस्य महाकौष्ठिलः।" [ स्फुटार्था–पृष्ठ ११-१२ ] आभिधार्मिकाणां नयेन त्वभिधर्मपिटको बुद्धवचनम्। तथाहि—"यथा स्थविरधर्मत्रातेन उदानाः 'अनित्या बत संस्काराः' इत्येवमादिका विनेयवशात् तत्र तत्र सूत्र उक्ता वर्गीकृता एकत्रीकृताः। एवमभिधर्मोऽपि धर्मलक्षणोपदेशस्वरूपो विनेयवशात् तत्र तत्र भगवतोक्तः स्थविरकात्यायनीपुत्रप्रभृतिभिर्ज्ञानप्रस्थानादिषु पिण्डीकृत्य स्थापित इत्याहुर्वैभाषिकाः[1]।" [ स्फुटार्था–पृष्ठ १२ ] एवमुभयोर्मतयोः पर्यालोचने प्रतिफलति यत् सौत्रान्तिकानां नयेनाभिधर्मपिटकस्य साक्षाद् बुद्धवचनत्वाभावात् श्रावकवचनता स्वीक्रियते। आभिधार्मिकाणां नयेन त्वभिधर्मपिटकस्य साक्षात् श्रावकवचनत्वेऽपि शब्दतोऽर्थतश्चापि बुद्धवचनानुवादकत्वादस्ति बुद्धवचनता ( गीतादीनां साक्षाद् व्यासादिनिबद्धत्वेऽपि कृष्णादिवचनतावत् ) इत्यङ्गीक्रियते। नन्वेवं स्वीक्रियमाणे सौत्रान्तिकनये पिकटत्रयव्यवस्था नास्तीति न भ्रमितव्यम् । ते हि सूत्रान्तविशेषानभिधर्मतया स्वीकृत्य पिटकत्रयं व्यवस्थापयन्ति । तथोक्तम्—"कः सौत्रान्तिकार्थः ? ये सूत्रप्रामाणिका न शास्त्रप्रामाणिकास्ते सौत्रान्तिकाः। यदि न शास्त्रप्रामाणिकाः कथं तेषां पिटकत्रयव्यवस्था—सूत्रपिटको विनयपिटकोऽभिधर्मपिटक इति । सूत्रेऽपि ह्यभिधर्मपिटकः पठ्यते त्रैपिटको भिक्षुरिति। नैष दोषः। सूत्रविशेषा एव ह्यर्थविनिश्चयादयोऽभिधर्मसंज्ञा येषु धर्मलक्षणं वर्ण्यते।" [ स्फुटार्था–पृष्ठ ११-१२ ] स्थविरा अपि वैभाषिकवदभिधर्मपिटकं बुद्धभाषितमेव स्वीकुर्वन्ति। यद्यपि स्थविरेष्वपि बभूवुर्बहवो विप्रतिपन्ना ये नैवाभिधर्मपिटकं बुद्धवचनमूरीचक्रुः। यदुक्तम्—"वितण्डवादी पुनराह। कथावस्तु कस्माद् गृहीतम्। ननु सम्यक्संबुद्धस्य परिनिर्वाणतोऽष्टादशवर्षाधिके द्वे वर्षशते अतिक्रम्य मौद्गलिपुत्रतिष्यस्थविरेण एतत्स्थापितम्। तस्मात् श्रावकभाषितत्वात् परित्यजथ तदिति।........" [ अत्थसालिनी १।५ ] एतान् विप्रतिपन्नान् निराकरिष्णवः स्थविरा एवमाहुः—"मौद्गलि-

---

1 "विभाषया दीव्यन्ति चरन्ति वा वैभाषिकाः। विभाषां वा विदन्ति वैभाषिकाः। उक्थादि ( ४-२-६० ) प्रक्षेपाट्ठक्।" [ स्फुटार्था–पृष्ठ १२ ] एतेन विरुद्धा भाषेति वर्णयन्तो वैभाषिका इति सर्वदर्शनसंग्रहकर्तुर्वितथनिर्वचनं निराकृतं वेदितव्यम्।

पुत्रतिष्यस्थविर इदं प्रकरणं देशयन् नात्मनो ज्ञानेनादेशयत्, शास्त्रा पुनर्दत्तनयेन स्थापित-मातृकयाऽदेशयत्। इति····सकलमप्येतत् प्रकरणं बुद्धभाषितमेव नाम जातम्। [ अत्थसालिनी १७ ] यथा किम्? यथा मधुपिण्डकसूत्रान्तादीनि। ( कात्यायनेन व्याकृतं मधुपिण्डकसूत्रान्त-मुद्दिश्योक्तं भगवता ) अहमपि···· एवमेव व्याकुर्यां यथा····महाकात्यायनेन व्याकृतम्। एवं शास्त्रा अनुमोदितकालतः प्रस्थाय पुनः सकलं सूत्रान्तं बुद्धभाषितं नाम जातम्। आनन्द-स्थविरादिभिर्विस्तारितसूत्रान्तेष्वप्येष एव नयः।" [अत्थसालिनी १।८] अथ पुनरपि विप्रतिपन्ना आहुः—"स चेदभिधर्मो बुद्धभाषितो यथानेकेषु सूत्रसहस्रेष्वेकस्मिन् समये भगवान् राजगृहे विहरतीत्यादिना नयेन निदानं सज्जितम्, एवमस्यापि निदानं सज्जितं भवेदिति।" [ अत्थसालिनी १।७३ ] इत्याशङ्कां मनसि निधाय सुमनदेवस्थविरो निदानं कथयन्नेवमाह—"एकस्मिन् समये भगवान् देवेषु विहरति त्रयस्त्रिंशेषु पारिच्छत्रकमूले पाण्डुकम्बलशिलायाम्। तत्र खलु भगवान् देवानां त्रयस्त्रिंशानामभिधर्मकथामकथयत्—कुशला धर्मा अकुशला धर्मा अव्याकृतधर्मा इति। [ अत्थसालिनी १।७६ ] अन्येषु पुनः सूत्रेष्वेकमेव निदानम्। अभिधर्मे द्वे निदाने—अधिगमनिदानं देशनानिदानं चेति। तत्राधिगमनिदानं दीपङ्करदशबलतः प्रस्थाय यावन्महाबोधिपल्यङ्काद् वेदितव्यम्। देशनानिदानं यावद् धर्मचक्रप्रवर्तनात्।" [ अत्थसालिनी १।७७ ] एवं त्रयस्त्रिंशेषु प्रोक्तोऽभिधर्मपिटको लोके कथं प्राचरदित्यत्राप्याहुः स्थविराः— "( देशयन्नभिधर्मपिटकम् ) भिक्षाचारवेलायां यावन्ममागमनादेतावन्तं नाम धर्मं देशयेति निर्मितबुद्धं निर्माय हिमवन्तं गत्वा नागलतादन्तकाष्ठं खादित्वा अनवतप्तह्रदे मुखं प्रक्षाल्य उत्तरकुरुतः पिण्डपातमाहृत्य महाशालमालके निषण्णो भक्तकृत्यं करोति स्म। शास्ता कृतभक्तकृत्यः ( सेवार्थे समागतं शारिपुत्रं प्रति ) शारिपुत्र! अद्य मयैतावान् नाम धर्मो भाषितः। तं····भिक्षूणां वाचयेति स्थविरस्य कथयति। ( इति ) उक्त्वा देवलोकं गत्वा निर्मितबुद्धेन देशितस्थानात् प्रस्थाय स्वयं धर्मं कथयति। स्थविरोऽपि गत्वा भिक्षूणां धर्मं देशयति" इति। [ धम्मपद-अट्ठकथा, बुद्धवग्ग, यमकपाटिहारियवत्थु ]

सर्वस्यैतादृशस्य सर्वथैवानैतिहासिकस्य वृत्तान्तस्यैकमात्रं प्रयोजनं प्रवृत्तिश्चाभिधर्मपिटकं बुद्धवचनमभ्युपगन्तुमेव। एवं स्थविराणां वैभाषिकाणां चाभिधर्मपिटकस्य बुद्धवचनत्वसाधने प्रयुक्ता युक्तयो यद्यपि चारित्र्यविदैतिहासिकैर्नोरीकर्तव्यास्तथापि तार्किकदृष्ट्या मृषा न भवन्ति। यतस्तदेव वस्तुतो बुद्धवचनं यन्न बुद्धाभिप्रायविपरीतं भवति। केयं नाम बुद्धाभिप्रायाविपरीतता? 

अत्राह मैत्रेयनाथः—

यदर्थवद् धर्मपदोपसंहितं त्रिधातुसंक्लेशनिबर्हणं वचः।
भवेच्च यच्छान्त्यनुशंसदर्शकं तदुक्तमार्षं विपरीतमन्यथा ॥

[ बोधिचर्यावतारपञ्जिका ]

एतत्तर्कप्रकाशेऽभिधर्मपिटको बुद्धवचनमिति स्वीकर्तुं शक्यते, अभिधर्मप्रतिपाद्यविषयस्य धर्मप्रविचयस्य सूत्रान्तेषु दर्शनात् तस्यैव सर्वनिकायसंमतायामश्वजिदुक्तगाथामामुपलभ्यमानत्वात्। इयं च सा गाथा—

ये धम्मा हेतुप्पभवा हेतुं तेसं तथागतो आह।
तेसं च यो निरोधो एवं वादी महासमणो[1] ॥

[ विनयपिटक, महावग्ग ]

( ३ ) ऐतिहासिकदृष्ट्या तु सकलोऽभिधर्मपिटको बुद्धोत्तरकालवर्तिनामाचार्याणां कृतिः। तस्य निर्माणे नहि केवलं केषाञ्चित् पुरुषविशेषाणां कारित्रं प्रत्युत निकायविशेषस्यापि तत्र भवति कारित्रम्। ये च तत्त्ववादिनोऽभिधर्मपिटकरचनायां पुरा बद्धपरिकरा बभूवुर्ये च प्राधान्येन प्रेरका बभूवुस्तेषु बहवः सर्वास्तिवादिपरम्परायां स्मृता विद्यन्ते। स्थविरपरम्परायां तु मौद्गलिपुत्रतिष्यः कथावस्तुकर्ता केवलमेक एव स्मृतस्तिष्ठति, अन्ये सर्वे तु निर्दयं विस्मारिता येनाभिधर्मपिटको बुद्धवचनं सिद्ध्येदिति। एवं त्रिपिटकान्तर्गतस्याभिधर्मस्यैतिहासिकं चरित्रं प्रस्तोतुं स्थविराः परममकिञ्चना दृश्यन्ते। केवलं सर्वास्तिवादिन एव चरित्रविमर्शनक्षमां काञ्चिदैतिहासिकीं सामग्रीं समुपहरन्तो दृक्पथमुपयान्तीति स्थविरपरम्परापेक्षया भवत्येव प्रमाणतरा सर्वास्तिवादिनामभिधर्मपरम्परा। निकायान्तराणामभिधर्मपिटकानुपलम्भान्न ज्ञायते तेषां परम्परेतिवृत्तमिति साम्प्रतं स्थविरास्तथा सर्वास्तिवादिन एव भवन्त्यत्र सहायाः।

( ४ ) आभिधार्मिकाणां वैभाषिकाणां परम्परायां श्रूयते यत्कनिष्कराज्यकाले कात्यायनीपुत्रप्रभृतिभिर्ज्ञानप्रस्थाननाम्ना अष्टग्रन्थमभिधर्मशास्त्रं संगृह्य तत्र विभाषानाम्नीं महाटीकां

---



१ ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

रचयामासुर्यस्या लेखको महाकविरश्वघोषः ( पुरा व्यासोक्तस्य महाभारतस्य लेखको गणेश इव ) बभूव[1] । स्थविराणां परम्परायामपि सप्तस्थविराभिधर्मपिटकग्रन्थेष्वन्यतमस्य कथावस्तुप्रकरणस्येतिवृत्तमधिकृत्य तदर्थकथायां स्मर्यते यद् धर्माशोककाले मौद्गलिपुत्रतिष्यः परवादप्रमथनाय कथावस्तुप्रकरणं प्रोवाच । विभाषासहिते ज्ञानप्रस्थाने कथावस्तुप्रकरणे च वर्तते बहुविधा ऐतिहासिकी सामग्री बौद्धतत्त्ववादचरित्रदिग्दर्शनपरेत्येतद्ग्रन्थजातमहत्त्वमविस्मरणीयमेव ।

( ५ ) विभाषायां स्मृतेष्वाचार्येष्वन्यतमोऽस्ति भदन्तघोषकः । अस्य ज्ञानोत्पादनशास्त्रं विभाषायां स्मृतमपि ग्रन्थरूपेण नाद्य यावदुपलब्धम् । अस्यापरा कृतिरभिधर्मामृतशास्त्रं चीनभाषान्तर्गतमद्यापि समुपलभ्यते[2] । अयं भदन्तघोषकस्तुखारदेशीयः सवसुमित्रः परिनिष्ठितायां चतुर्थसङ्गीतौ कालंकृते महाराजकनिष्के अश्मपरान्तदेशाधिपतिनाहूत इति तारानाथ आह[3] ।

( ६ ) भदन्तघोषकः सर्वास्तिवादसिद्धान्तेष्वन्यतमस्य लक्षणान्यथात्ववादस्य प्रवर्तक आसीत् । स चायं सिद्धान्तः कोशभाष्ये एवं विवृतो वसुबन्धुना—"धर्मोऽध्वसु प्रवर्त्तमानोऽतीतोऽतीतलक्षणयुक्तः, अनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्तः । तद्यथा पुरुष एकस्यां स्त्रियां रक्तः शेषास्वविरक्त इति ।" [कोश ५।२६ कारिकायां स्फुटार्थोद्धृतं भाष्यम्; तत्त्वसंग्रहः-भाग १ पृ० ५०४ ] स्फुटार्थायां चैष एवं व्याख्यातः—"यद्यनागतमतीतप्रत्युत्पन्नाभ्यां वियुक्तं स्यादेवं सति नानागतमेवोत्पन्नमतीतं वेति स्यात् । अथातीतमनागतप्रत्युत्पन्नाभ्यां वियुक्तं स्याद् नानागतं वर्तमानं चातीतं स्यात् । वर्तमानमतीतानागताभ्यां वियुक्तं स्यादनागतमेव वर्तमानं वर्तमानमेवातीतं स्यात् । लब्धवृत्तिना हि लक्षणेन युक्तो व्यवस्थाप्यते ।" [ स्फुटार्था-पृ० ४६९ ]

---

१ A biography of Vasubandhu ( Toung-Pas, July, 1804. )

२ Nanjio 1278; Taisho 1553.

३ L'abhidharmakos'a de Vasubandhu, Par L. V. Poussin, Introduction P. XLVI.

(७) यथान्ये सर्वास्तिवादा[1] धर्माणां त्रैकालिकास्तित्वाभ्युपगमे साग्रहास्तथा भदन्तघोषकस्यापि सर्वास्तिवादो लक्षणान्यथात्वरूपो धर्माणां त्रैकालिकास्तित्वप्रतिपादने साग्रह एव वर्तत इति प्रोक्तेन लक्षणेन स्पष्टीभवति। नहि स्थविरास्त्रैकालिकं धर्मास्तित्वं स्वीकुर्वन्ति। तदेतद्विशदीकुर्वन्नाह भदन्तनागसेनः —"किमेषोऽध्वा नाम। अतीतोऽध्वा, अनागतोऽध्वा, प्रत्युत्पन्नोऽध्वेति। किं पुनः सर्वोऽध्वास्तीति। कश्चिदध्वास्ति कश्चिन्नास्ति। कतमः पुनरस्ति कतमो नास्तीति। ये ते संस्कारा अतीता विगता निरुद्धा विपरिणताः सोऽध्वा नास्ति। ये धर्मा विपाका ये च विपाकधर्मधर्मा ये चान्यत्र प्रतिसन्धिं ददति सोऽध्वास्ति। ये सत्त्वाः कालंकृताः अन्यत्रोपपन्नाः स चाध्वास्ति। ये च सत्त्वाः कालंकृता अन्यत्रानुपपन्नाः सोऽध्वा नास्ति। ये च सत्त्वाः परिनिर्वृताः स चाध्वा नास्ति परिनिर्वृत इति।" [ मिलिन्दपञ्ह P. T. S. pp. 50—51 ] एवं मध्याध्वनो व्यक्तत्वादस्तित्वम्। अतीतानागताध्वनोरव्यक्तत्वादस्तित्वं नानुभवसिद्धम्। तथा च गीयते—

---

१ चत्वारः सर्वास्तिवादाः कोश एवं प्रोक्ताः—

सर्वकालास्तिउक्तित्वाद् द्वयात्सद्विषयात्फलात्।
तदस्तिवादात् सर्वास्तिवादा इष्टाश्चतुर्विधाः॥
ते भावलक्षणावस्थान्यथान्यथिकसंज्ञिताः।
तृतीयः शोभनोऽध्वानः कारित्रेण व्यवस्थिताः॥ [ ५।२५–२६ ] इति।

एतेषु भावान्यथात्ववादी भदन्तधर्मत्रातः। लक्षणान्यथात्ववादी भदन्तघोषकः। अवस्थान्यथात्ववादी भदन्तवसुमित्रः। अन्यथान्यथात्ववादी भदन्तबुद्धदेवः। एतान् कटाक्षयन्नाह भदन्तशान्तरक्षितग्रन्थे कमलशीलः—"तत्र प्रथमः परिणामवादित्वात्सांख्यमतान्न भिद्यते। ··· द्वितीयस्यापि वादिनोऽयं संकर एव सर्वस्य सर्वलक्षणयोगात्। ··· तृतीयस्य कारित्रेणाध्वव्यवस्था। .... चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति। [ सटीक तत्त्वसंग्रह–पृष्ठ ५०४–५०५ ] इति।

कारित्रमधिकृत्य तु प्रोच्यते—

किं विघ्नकृत् कथं नान्यदध्वायोगस्तथा मतः।
अजातनष्टता केन गम्भीरा जातु धर्मता॥ [ ५७ ] इति।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ [ गीता २।२८ ]

एतेन स्पष्टीभूतं यत्स्थविराणां नयेन प्रत्युत्पन्नाध्वास्तित्वमेवास्ति न त्वतीतानागताध्वास्तित्वम् । तदेतद् दृष्टान्तेन विशदीचकार भदन्तनागसेनः—"क्षीरं दुह्यमानं कालान्तरेण दधि परिवर्तेत । दधितो नवनीतम् । नवनीततो घृतं परिणमेत । यो नु खल्वेवं वदेद् यदेव क्षीरं तदेव दधि यदेव दधि तदेव नवनीतं यदेव नवनीतं तदेव घृतमिति ( किं ) स सम्यग् वदेत् ? नहि । एवमेव धर्मसन्ततिः संदधाति । अन्य उत्पद्यतेऽन्यो निरुध्यते । तेन न च स नान्यः ।" इति [ मिलिन्दपञ्ह P. T. S. p. 42] परं सर्वास्तिवादिनः—"यत्किञ्चिद्रूपमतीतानागतप्रत्युत्पन्नम् ।···अयमुच्यते रूपस्कन्ध इत्यादिवचनेन । सर्वेऽप्यतीतादिभेदा धर्माः स्कन्धस्वभावं न जहति । तस्मात्सर्वमस्त्येव" इति । [ पंचप्पकरणट्ठकथा, सिंहलसंस्करण, पृ० ११० ] "अतीतं चेद्भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यस्त्यतीतं रूपं तस्मात् श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवतीति विस्तरः । तथा यत्किञ्चिद्रूपमतीतमनागतादि तत्सर्वमभिसंक्षिप्य रूपस्कन्ध इति संख्यां गच्छति ।" [ तत्त्वसंग्रह पृ० ५०५ ] इति चैवमादीन् सूत्रान्तानाश्रित्य धर्माणां त्रैकालिकास्तित्वं यथाकथञ्चित्साधयन्ति । धर्माणां त्रैकालिकास्तित्वाभ्युपगम एवोच्यते सर्वास्तिवाद इति । स चायं स्थविरेभ्यो भेदको वादस्तैरेव कथावस्तुप्रकरणे सर्वमस्तीति षष्ठ्यां कथायां निराकृतः ।

( ८ ) स्थविरवादे सर्वास्तिवादे च सन्त्यन्येऽपि मिथो भेदका धर्माः । आगमेषु स्कन्धधात्वायतनभेदैर्धर्मा विविच्य दर्शिताः । अभिधर्मेऽपि ते तथैवोरीकृताः । तत्र मनः स्कन्धेषु विज्ञानस्कन्धे परिगणितम् । विज्ञानस्कन्धो नाम षड्विज्ञानानि ( = चक्षुःश्रोत्रघ्राणजिह्वाकायविज्ञानानि पञ्च + मनोविज्ञानं च ) । आयतनेषु तदिदं मनो मनआयतनं कथ्यते । धातुषु चेदं मनोधातुर्मनोविज्ञानधातुश्चेति प्रोच्यते । मनआयतनं मनोधातुश्चेति न भिन्नं वस्तुतत्त्वम् । मनोविज्ञानं मनोविज्ञानधातुश्चापि नार्थान्तरम् । तथा च पञ्चेन्द्रियविज्ञानानि मनः मनोविज्ञानं चेति सप्तविधं विज्ञानतत्त्वमिति स्थविराः सर्वास्तिवादिनश्चोभये स्वीकुर्वते[1] । परं षड्विज्ञानेभ्यो मनो

---

१. मनआयतनमेव सत्तविञ्ञाणधातुवसेन भिज्जति । [ अभिधम्मत्थसंगह ७।४१ ]
धातवः सप्त च मताः षड्विज्ञानान्यथो मनः । [ अभिधर्मकोश १।१६ सी–डी ]

भिन्नं न वेत्युनुयोगे नोभयेषामेकमुत्तरम् । सर्वास्तिवादिमते तु षड्विज्ञानाव्यतिरिक्तमेव मनः[1] । परं स्थविरमते मनो न केवलं षड्विज्ञानेभ्योऽतिरिच्यते प्रत्युत मनोविज्ञानादपि व्यतिरिच्यते । तन्मतानुसारं पञ्चद्वारावर्जनसंप्रतीच्छनकारित्रं हि मनः । संतीरणव्यवस्थापनकारित्रं तु मनोविज्ञानम्[2] । न केवलमेतदेव प्रत्युत स्थविरनये सप्तविधविज्ञानानामाश्रयोऽपि सप्तविज्ञानव्यतिरिक्तं किमपि हृदयवस्त्वाख्यं तत्त्वं वर्तते । सर्वास्तिवादिनये तु षड्विज्ञानानाम् ( =पञ्चेन्द्रियविज्ञानानां मनोविज्ञानस्य च ) आश्रय एतेषां षण्णामेवैकतमविज्ञानं भवति नान्यत् । यच्च आश्रयस्तदेव मनः[3] । एवं स्थविरनये विज्ञानाश्रयो योगाचारमतवत्[4] षड्विज्ञानव्यतिरिक्तं सदपि न मनस्तत्त्वं भवति प्रत्युत सूक्ष्मभूतान्तर्गततया स हृदयवस्त्वाख्योऽर्थो विज्ञानाश्रयो भौतिकं तत्त्वं भवति[5] । भदन्तघोषकोऽपि षड्विज्ञानव्यतिरिक्तं सत् षड्विज्ञानाश्रयभूतं किमपि तत्त्वं नैव कल्पयति । तन्मते एकमेव वस्तु चित्तमनोविज्ञानपदैर्निरुच्यते । तथोक्तम्–"चित्तं मनो विज्ञानमित्यनर्थान्तरम् । निरुक्तावेवान्तरमिति ।" [अभिधर्मामृत ५।१०]

---

१ षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः । [ अभिधर्मकोश १ । १७ ए-बी ] अत्र व्याख्या—"षण्णामिति निर्धारणे षष्ठी । तेषामेव मध्ये नान्यदित्यर्थः ।" [ स्फुटार्था–पृ० ३८ ]

२ अभिधम्मत्थसंगह ३ । ९ ।

३ "मनोधातु हृदयं··· निस्सिता येव पवत्तति । मनोविञ्ञाणधातु··· हृदयं निस्साये व पवत्तति । पंच विञ्ञाणधातुयो पंच पसादवत्थूनि ( = चक्खुसोतघानजिह्वाकायवत्थूनि ) निस्सायेव पवत्तन्ति ।" [ अभिधम्मत्थसंगह ३ । २५ ]

"ताम्रपर्णीया अपि हृदयवस्तु मनोविज्ञानधातोराश्रयं कल्पयन्ति । तच्चारूप्यधातावपि विद्यत इति वर्णयन्ति ।" [ स्फुटार्था–पृ० ३९ ]

अभिधर्मार्थसंग्रहे तु हृदयवस्तुसत्ता नारूप्यधातौ कल्प्यते—

"वत्थुसंगहे वत्थूनि नाम चक्खुसोतघानजिह्वाकाय ( वत्थूनि ) हृदयवत्थु चेति छब्बिधानि भवन्ति । तानि कामलोके सब्बानि पि लब्भन्ति । रूपलोके घानादित्तयं नत्थि । अरूपलोके पन सब्बानि पि न संविज्जन्ति ।" [ अभिधम्मत्थसंगह ३ । २४ ]

"षष्ठ्याश्रयप्रसिद्ध्यर्थम् [अभिधर्मकोश १।१७ सी ]" ह्याश्रयार्थं मनः स्वीक्रियते ।

४ योगाचारदर्शनेन तु षड्विज्ञानव्यतिरिक्तोऽप्यस्ति मनोधातुः । [स्फुटार्था–पृ० ३९]

५ अभिधम्मत्थसंगह ।

एवं स्थविरेभ्यो भिन्नमतवाद्यपि भदन्तघोषकः षड्विज्ञानानां कारित्रनिरूपणप्रसङ्गे स्थविरानुवर्ती दृश्यते। तथा चोक्तम्—"पञ्चविज्ञानानि न शक्नुवन्ति विवेक्तुं मनोविज्ञानं शक्नोति विवेक्तुमिति।" [ अभिधर्मामृत ५। १० ] स्थविराणां नये सन्तीरणं व्यवस्थापनं चेति कारित्रद्वयं मनोविज्ञानस्य [ द्रष्टव्यम्-अभिधम्मत्थसंगह ३। ६-१२ ]। भदन्तघोषको यत् 'विवेक्तुम्' इति पदेन वदति तदेव स्थविरैः सन्तीरणव्यवस्थापनपदाभ्यामुच्यते। एकः समासेन वदति। अपरो व्यासेन। वस्तुतत्त्वं तु नोभयत्र भिद्यते।

( ६ ) धर्माणां परिगणनेन व्यवस्थापनं कर्तुं सर्वेऽभिधर्मग्रन्था बद्धपरिकरा इव दृश्यन्ते। तत्र रूपस्कन्धे पञ्चेन्द्रियाणि चक्षुःश्रोत्रघ्राणजिह्वाकायाख्यानि, पञ्चविषया रूपशब्दगन्धरसस्प्रष्टव्याख्या अविज्ञप्तिश्चेत्येकादशधर्मा वैभाषिकैः परिगण्यन्ते। भदन्तघोषकस्यापि रूपस्कन्धव्यवस्थापनं वैभाषिकानुवर्ति विद्यते। तत्र केयं नामाविज्ञप्तिर्या रूपस्कन्धान्तर्गता प्रतिपाद्यते। धर्माधर्मलक्षणा हि सेति वक्तव्या। भदन्तघोषकस्तामिमामविज्ञप्तिं लक्षयन्नाह—"कुशलाकुशलचित्तजं भवत्यविज्ञप्तिरूपं न त्वव्याकृतचित्तजम्। तत्कस्य हेतोः? अव्याकृतचित्तस्यातिदुर्बलत्वात्।" [ अभिधर्मामृत ४।८ ] सरलं सुबोधं चेदं लक्षणं दृष्ट्वा यदा वयम्—

विक्षिप्ताचित्तकस्यापि योऽनुबन्धः शुभाशुभः।
महाभूतान्युपादाय सा ह्यविज्ञप्तिरुच्यते ॥ [ अभिधर्मकोश १।११ ]

इति कोशलक्षणं पश्यामस्तदा शिष्याणां कृते कोशलक्षणस्य दुर्बोधत्वं प्रतीयत एव। अस्याः कारिकाया भाष्येऽविज्ञप्तेर्लक्षणान्तरमपि दृश्यते। तच्चेदम्—"विज्ञप्तिसमाधिसंभूतं कुशलाकुशलरूपमविज्ञप्तिः" इति। इदं लक्षणमधिकृत्याह स्फुटार्था—"शिष्यसुखावबोधार्थं संक्षेपतो वाक्येन तदविज्ञप्तिरूपं देशयत्याचार्यः" इति। मन्ये वसुबन्धुना कारिकोक्तं लक्षणं दुरूहं प्रविचिन्त्य प्रत्नाचार्यान् भदन्तघोषकादीन् समनुसरता तेषामेव रीत्या यावच्छक्यं सरलं लक्षणं प्रणीतम्। यद्यपि सरलमपि वसुबन्धुलक्षणं व्याख्यानसापेक्षमस्त्येव। तत एव तत्स्फुटार्थायां व्याख्यातम्। तथाहि—"कायविज्ञप्तिसंभूतं कुशलं प्रातिमोक्षसंवरसंगृहीतं नैवसंवरनासंवरसंगृहीतं च अकुशलं पुनरसंवरसंगृहीतं नैवसंवरनासंवरसंगृहीतं च। समाधिसंभूतं तु कुशलमेव। तद् द्विविधम्—सास्रवसमाधिसंभूतं ध्यानसंवरस्वभावम्, अनास्रवसमाधिसंभूतमनास्रवसंवरस्वभावम्। उपादाय रूपस्वभावं च न चित्तचैतसिकादिस्वभावम्" इति। [ कोश १।११ इत्यत्र स्फुटार्था ]

एवम्—

रूपस्वभावाऽविज्ञप्तिः रूपस्कन्धसलक्षणा ।
प्रवर्तमाना द्विविधा कुशलाकुशलात्मिका ॥
अग्निर्यथेन्धनादेवं भूतेभ्यः सा समुत्थिता ।
सूक्ष्मत्वाद् धर्मधातौ सा संगृहीताभिधार्मिकैः ॥

योगाचाराणामपि सेयमविज्ञप्तिरनुमतैव । धर्मायतनान्तर्गता सा निरूप्यते । स्थविरास्तु नाविज्ञप्तिं स्वीकुर्वते । अविज्ञप्तिस्थानापन्नं तेषां भवति सूक्ष्मरूपम् [ 'सुखुमरूपम्' अभिधम्मत्थसंगह ६।८ ] । तस्मिन् सूक्ष्मरूपे जरानित्यतादयः केचन तादृशा अपि धर्माः संगृहीता विद्यन्ते ये भदन्तघोषकासङ्गवसुबन्धुप्रभृतिभिर्न रूपस्कन्धे प्रत्युत संस्कारस्कन्धे परिगणिताः । एतेन पारस्परिकविभेदेन स्पष्टीभवति यत् पिटके बहुधा प्रविभक्तानां धर्माणां पद्धतीकरणं कियद् दुष्करं वर्तते । तथा चाह भदन्तनागसेनः—"नौकया मह्यासमुद्रमध्यवगाह्य हस्तपुटेनोदकं गृहीत्वा जिह्वया प्राश्य जानीयात् पुरुष इदं गङ्गाया उदकम्, इदं यमुनाया उदकम्, इदमचिरवत्या उदकम्, इदं शरभ्वा उदकम्, इदं मह्या उदकमिति । दुष्करं ज्ञातुमिति । इतो दुष्करतरं भगवता कृतं यदिदं चित्तचैतसिकधर्माणामेकालम्बने प्रवर्तमानानां व्यवस्थानम्—अयं स्पर्शः, इयं वेदना, इयं सञ्ज्ञा, इयं चेतना, इदं चित्तमिति" इति । [ मिलिन्दपञ्ह P.T.S. P. 88 ]

( १० ) एवं धर्माणां संख्यायां तेषां व्यूढोपदेशे च यद्यपि प्रतिसंप्रदायं भेदो दृश्यते तथापि मूलभूततत्त्वपदार्थेषु तेषां भेदो नास्त्येव । तथा च सर्वेषां नये संक्षेपतः पञ्चैव पदार्थाः । ते च रूपवेदनासंज्ञासंस्कारविज्ञानाख्याः पञ्चस्कन्धाः । अस्य संक्षेपस्य भूय एव विस्तरः । यो हि धर्माणां द्वादशायतनेषु संग्रहः । द्वादशायतनानि नाम षडिन्द्रियाणि चक्षुःश्रोत्रघ्राणजिह्वाकायमनांसि षड्विषया रूपशब्दगन्धरसस्प्रष्टव्यधर्माः । अथास्य पुनरपि विस्तरे कृते धर्माः सर्वेऽष्टादशधातुषु संगृहीता भवन्ति । तथाहि—षडिन्द्रियाणि षड्विषया द्विषड्विज्ञानानि । द्विषड्विज्ञानपदं व्याख्यातव्यमस्ति । विज्ञानानां निर्देशः कदाचिदिन्द्रियनिमित्तेन भवति । यथा चक्षुर्विज्ञानं श्रोत्रविज्ञानं यावद् मनोविज्ञानमिति । कदाचिदयं निर्देशो विषयनिमित्तेन भवति । यथा रूपविज्ञानं शब्दविज्ञानं यावद् धर्मविज्ञानमिति । एवं षडिन्द्रियविज्ञानानि षड्विषयविज्ञानानि चेति यद्यपि द्वादश भवन्ति तथापि वस्तुतस्तानि षडेव । यतो न

विषयविज्ञानानां स्वरूपतो भवतीन्द्रियविज्ञानेभ्यो व्यतिरेकः। नापि चेन्द्रियविज्ञानानां भवति विषयविज्ञानेभ्यः स्वरूपविवेकः। एवं द्विविधं निरुच्यमानानि षडेव भवन्ति विज्ञानानि तत एव तानि द्विषड्विज्ञानानीति समाख्यया प्रोक्तानि। त इमे पञ्चस्कन्धाः, तानीमानि द्वादशायतनानि, त एतेऽष्टादशधातवः सर्वसंमताः। अथोत्तरं पुनरपि विश्लिष्यमाणेषु पदार्थेषु प्रतिसंप्रदायं विभेदो विलसन् दृश्यते विशेषतस्तु संस्कारस्कन्धनिर्देशे। पञ्चस्कन्धेषु वेदना भवति चैत्तधर्मः (= चित्तस्य धर्मः)। संज्ञापि चैत्तधर्म एव। संस्कारस्कन्धो द्विधा विभज्यते—चित्तसंप्रयुक्तश्चित्तविप्रयुक्तश्च। तयोश्चित्तविप्रयुक्तसंस्काराणां चित्तधर्मत्वं न भवति। चैत्तचैतसिकचित्तधर्मापरपर्यायाः सर्वे चित्तसंप्रयुक्ताः संस्काराश्चित्तविप्रयुक्ताः संस्काराश्चेति द्विविधाः सर्वसंस्काराः संस्क्रियमाणत्वात् प्रतीत्यसमुत्पन्नत्वाच्च भवन्ति संस्कृताः। तानेतान् संस्कृतधर्मानसंस्कृतं निर्वाणादिकं चाभिसंक्षिप्य धर्मधातुरिति भवति संग्रहनिर्देशः। धर्मधातुव्यतिरिक्तौ भवतो द्वौ संस्कृतधर्मौ रूपं च चित्तं च। तथा च रूपं चित्तं धर्मधातुश्चेति त्रयः पदार्था भवन्ति। येषु सर्वे धर्मा अन्तर्भवन्ति। सर्व एव हि तत्त्वविदो रूपमपि स्वीकुर्वन्ति, चित्तमप्यूरीकुर्वन्ति, धर्मधातुं चाप्यङ्गीकुर्वन्ति। तथा च सर्वेषां मूलभूततत्त्वपदार्थेष्वस्त्येवाभेदः।

(११) अथैतेषां मूलभूततत्त्वानां विभज्य निरूपणं कुर्वतां स्थविराणां नये सर्वे धर्मा अष्टाशीतिः, सर्वास्तिवादिनां नये पञ्चसप्ततिः, योगाचाराणां च नये शतम्।

(सावशेषम्)

---

# रसविमर्शः

म.म.श्रीनारायणशास्त्री खिस्ते

यस्मादुदेति भुवनं यत्र तिष्ठति निर्भरम् ।
जयत्यानन्दभूमासौ यत्र सर्वं प्रलीयते ॥ १ ॥
स्त्रीपुंविलक्षणं श्वेतरक्तवर्णप्रभोज्ज्वलम् ।
शिवशक्त्यात्मकं वन्दे धाम यत्कामशोधनम् ॥ २ ॥

रसस्वरूपं तदास्वादप्रकारं तद्भेदप्रभेदपरिकल्पनं तत्संख्यानं तदाश्रयप्रभेदं चाधिकृत्य शास्त्रेषु भूयान् विस्तरः कृतः पुराणैर्महर्षिभिर्ऋषिकल्पैर्व्याहतादेशैर्ध्वनिकारश्रीमदानन्दवर्द्धनश्रीमदभिनवगुप्तश्रीमम्मटाचार्यप्रभृतिभिः प्राचीनैर्निबन्धकारैरर्वाचीनैः श्रीविश्वनाथपण्डितराजजगन्नाथप्रभृतिभिश्च। तत्तट्टीकाकारैरपि बहुत्र पराक्रान्तम् । तत्तु जानन्त्येव रसशास्त्राध्वन्याः सर्वेऽपि विपश्चितः ।

शास्त्रीयपरिभाषागलग्रहादुन्मोच्यात्मानं वयं स्थिरया धिया मुहूर्तं विचारयेम, कोऽयं रसः ? तस्य कीदृगनुभूतिरस्माकमन्तरे स्फुरतीति । शास्त्रेषु तु न सर्वे रसास्वादाधिकारिणः। येषां तु केनापि हेतुना तादृशी वासना भवेत्, त एव रसास्वादं लभन्ते । जरच्छ्रोत्रियमीमांसकादीनां तु तादृशी वासनैव न भवतीति न ते रसास्वादाधिकारिणः । परन्तु निष्पक्षां धियमास्थाय स्वानुभूतिपथेनापि किञ्चिद्विचारणीयम् ।

सच्चिदानन्दरूपस्य परमेश्वरस्यानन्दरूपो देहो जन्तूनां स्थूलसूक्ष्मकारणदेहेषु कारणदेहस्थानीयः सर्वोत्कृष्टो देह इति वक्तुं शक्यम् । विमर्शात्मकस्वशक्त्यवगूढः प्रकाशात्मा परमेश्वरो हि 'रसो वै सः' इति श्रुत्या रसरूप एवेति वैकारेण निश्चयात्मना ध्वन्यते । इत्थं च रसरूपः परमेश्वरः स्वविमर्शशक्तिनिर्भरपरिरम्भप्रस्फुरद्विशुद्धानन्दनिर्झरैरोतप्रोतस्तस्मादेवानन्दभूम्नश्चराचरं वस्तुजातं सृजति । तच्च तत्रैव रममाणं तिष्ठति, लीयते चान्ते तत्रैवेति प्रसिद्धोऽयमर्थ उपनिषत्सु । जीवब्रह्माद्वयवादेंऽशांशिभावे वोभयथापि विचारे क्रियमाणे रसरूपस्य पारमेश्वरानन्दस्यानुभूतिः सर्वैरपि जीवैरुपलब्धुं शक्येति निश्चप्रचम् ।

रसाश्च अष्टौ नव दशैकादश इति च रसशास्त्रविदां मर्यादा । शृङ्गार एवैको रस इति श्रीभोजराजः । करुण एवैको रस इति च महाकविर्भवभूतिः । अद्भुत एवैको रस इति च नारायणः ।

इत्थं मिथो विभिन्नेऽनुभूतिपथे जाग्रति सति न सर्वे रसास्वादाधिकारिणः । जरच्छ्रोत्रिय-मीमांसकादीनां रसास्वादो न भवतीत्यादिकथनं लौकिकप्रायोवादमेव मन्यामहे । अपि च युगपत्सर्वेन्द्रियसुखास्वादात्मा आह्लादापरपर्यायो रसस्तु सर्वैरप्यनुभूयते । तादृश्यनुभूतिस्तु कस्यचित् क्वचिद्भवति, अन्यस्य चान्यत्र भवतीत्यनियतमेव । पाकशास्त्रीयेषु षट्सु रसेष्वपि कश्चिन्मधुरमेव बहु मन्यते, कश्चिल्लवणम्, कश्चिदम्लमितिवत् सर्वेऽपि तत्तद्रसास्वादभुजो रसिका एवेति सुवचम् । किं च, रसस्वरूपः परमेश्वरस्तु सर्वत्रैव ओतः प्रोत इति जागतिकेषु सर्वेषु पदार्थेषु पारमेश्वरीं व्याप्तिमनुभवन्तः सन्तः सर्वत्रैव रससत्तां निभालयन्ति । सर्वेऽपि प्राणिनः – न केवलं मानवा एव–तेषु तेषु पदार्थेषु रसमनुभवन्त्येव ।

प्राणिषु पदार्थेषु चोत्तमत्वं मध्यमत्वमधमत्वं चापेक्षिकमेव । क्रीडन्तो बालाः क्रीड-नमेव बहु मन्यन्ते, तत्रासक्ताः क्षुत्पिपासादिकमपि नानुभवन्ति । क्रीडनरभसे चात्मविस्मृता भवन्ति । स बालानां क्रीडारसोऽपि रस एव । अन्यथा तेषां तत्रात्मविस्मृतेरनुदयः स्यात् । इत्थं च येषां यदास्वादे आत्मविस्मृतिर्भवति तेषां कृते स एव रस इति कथ्यते चेन्नानुप-पन्नम् । ईदृश्यात्मविस्मृतिः सर्वेषामपि यत्र कुत्रापि भवत्येवेति तेषां कृते स एव रसः । तदा-स्वादकास्तेऽपि रसिका इति सुवचम् । गहनग्रन्थग्रन्थिभेदनासक्ता बहवो नैयायिकधुरन्धरा दिनं निशामप्यविदन्तः क्षुत्पिपासे अप्यनाकलयन्तः श्रूयन्ते । तेषां स एव रसः । तत्रैव तेषामात्म-विस्मृतिः सर्वेन्द्रियसुखात्मा महाह्लादोऽपि भवति ।

इत्थं च रसा अनन्ताः, रसाश्रया रसिकाश्चानन्ता इति प्रतिभाति । इयं कापि नवीना दिगुन्मीलिता । अत्र निर्मत्सरैः सद्भिः सूक्ष्मेक्षिकयानुध्यातव्यम् ।

इमां नवीनां दिशं प्रमाणयितुमुपयुक्तानि कानिचिद्वचनानि श्रीशारदातनयकृते भाव-प्रकाशने द्वितीयाधिकारे समुपलभ्यन्ते । तानि यथा—

व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं नयन्ति रसतामितरे स्थायिनं श्रिताः ॥ (भरतमतम्)

यथा नानाप्रकारैर्व्यञ्जनौषधैः पाकविशेषैश्च संस्कृतानि व्यञ्जनानि मधुरादिरसानामन्यतमेनात्मना परिणमन्ति, तद्भोक्तृणां मनोभिस्तादृशात्मतयास्वाद्यन्ते तथा नानाप्रकारैर्विभावादिभावैरभिनयैः सह यथार्हमभिवर्द्धिताः स्थायिनो भावाः सामाजिकानां मनसि रसात्मना परिणमन्तस्तेषां तादात्विकमनोवृत्तिभेदभिन्नास्तत्तद्रूपेण तै रस्यन्ते। ( भरतवृद्धमतम् )

नानाद्रव्यौषधैः पाकैर्व्यञ्जनं भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह ॥
इति वासुकिनाप्युक्तो भावेभ्यो रससम्भवः।
तस्याद्रसास्तु भावेभ्यो निष्पद्यन्ते यथार्हतः॥ ( वासुकिमतम् )
न द्रव्यं न च सामान्यं न विशेषो गुणो न च।
न कर्म समवायो न न पदार्थान्तरं च सः॥
विकारो मानसो यस्तु बाह्यार्थालम्बनात्मकः।
विभावाद्याहितोत्कर्षो रस इत्युच्यते बुधैः॥
रसो मनोविकारोऽपि पदार्थान्यतमो भवेत्।
पदार्थाः षट् प्रमीयन्ते रसस्यानुभवात्मकाः॥
अतो रसः पदार्थेभ्यो मात्रया क्वापि भिद्यते।
द्रव्यादीनां पदार्थानां तत्तद्रूपतया रसः॥ इति च।

इत्यादीनि बहूनि वचनान्यत्रान्यत्र चोपलभ्यन्ते। तैः स्वबुद्ध्या स्वानुभूतिपथे विचरद्भिः सद्भिः सम्यगिदमनुसन्धेयम्। केवलं दिङ्मात्रमिदमुक्तम्। यथावसरमत्र विशेषविमर्शः करिष्यत इति शिवम्।

---

# व्यञ्जनाविलासः

श्रीमुकुन्दशास्त्रिखिस्ते

इह खलु जगति स्वर्गादिलोकानां विषये जनानामनेकविधाः कल्पना जार्यन्ते। केचिच्चतुर्दशभुवनानि प्रतिपादयन्ति। इतरे सप्तलोकान् व्याचक्षते। अन्ये लोकत्रयमभिदधति। साम्प्रतिका वैज्ञानिकास्त्वपरस्य ग्रहलोकस्यापि चाक्षुषीकरणे प्रयतन्ते। अथ च तत्रत्यानि नानाविधानि रहस्यान्यप्युद्घाटयन्ति। परन्त्वेतदतिरिक्तोऽपि कश्चन लोको विद्यते। यत्रत्यः प्रजापतिर्मनुष्यजातीयोऽथ चाद्वितीयवैद्यश्चास्ति। यः कतिपयैरेव शब्दैरचेतनान् चेतनवच्चेतनानचेतनवत्सम्पादयितुं प्रभवति। जडेष्वपि तादृशीं शक्तिं प्रयच्छति यामनुभूय वयं सव आनन्दैराप्लुता भवामः। स च लोकः काव्यलोक एव। उक्तं च तद्विषये केनचित्—

अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथैव परिवर्तते॥

अस्मिन् काव्यलोके प्रतिक्षणं नानाविधानि दृश्यान्यवलोक्यन्ते। तानि च निरन्तरं नवनवां सुखानुभूतिं प्रयच्छन्ति न चर्वितचर्वणानन्दमित्येव प्रशंसास्पदम्। अत एव केनचिदुक्तम्—'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति। अस्मिन् काव्ये नूतनानन्दानुभवनिमित्तान्वेषणे विधीयमाने आलङ्कारिकैरङ्गीकृता नूतना व्यञ्जनाशक्तिरेव तादृशं नूतनानन्दं प्रयच्छतीति वक्तुं शक्यते। अस्याः काव्ये नवत्वम्–'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' इति कारिकाव्याख्याने अत्रेति शब्दस्य काव्ये इत्यर्थं कुर्वता काव्यप्रकाशकारेण प्रतिपादितम्। यतो वैयाकरणमतेऽर्थबोधजनकतामात्रं शक्तिः। गङ्गायां घोष इत्यत्र गङ्गापदस्य तीररूपार्थबोधकत्वात्तीररूपार्थोऽपि शक्त्यैव लक्ष्यते। सा च द्विविधा–प्रसिद्धा, अप्रसिद्धा च। आद्याऽभिधा, द्वितीया लक्षणा। व्यञ्जना तु तैः स्वीकृतापि न साऽर्थप्रतीत्यनुकूला, किन्तु स्फोटप्रतीत्यनुकूला। उक्तं च वैयाकरणभूषणे—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरन्तरम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥

अतः शब्दस्य वाचकत्वमात्रत्वादैकविध्यमेव। नैयायिकमतेऽपि गङ्गाशब्दात्प्रवाहत्वावच्छिन्नविषयकोपस्थितौ—'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति नियमेन तीरस्याप्युपस्थितिसंभवे तत्रेश्वरेच्छाकल्पनाप्रयासो व्यर्थ एव। परन्तु गङ्गाशब्दाच्छक्त्या प्रवाहोपस्थितौ लक्षणया च तीरविषयकोपस्थितौ शैत्यपावनत्वादिप्रतीतिः केन स्यात्? न च सा मानसी प्रतीतिरिति वक्तुं शक्यम्, सर्वासां मानसप्रतीतीनामिव तस्याः सार्वकालिकत्वाभावात्। शैत्यपावनत्वादिप्रतीतिस्तु गङ्गाशब्दसत्त्वे एव भवति, तीरे घोष इत्युक्तौ तु न तत्प्रतीतिरिति तस्या गङ्गाशब्दान्वयव्यतिरेकानुविधायित्वम्। शब्दादर्थप्रतीतिस्तु वृत्तिं विना न भवतीति तदर्थं व्यञ्जनावश्यं स्वीकार्या। सम्बन्धमात्रबोधनपरिक्षीणां तात्पर्यवृत्तिं स्वीकुर्वाणैरभिहितान्वयवादिभिरन्वयांशे शक्तिं स्वीकुर्वाणैरन्विताभिधानवादिभिश्च व्यंग्यार्थबोधाय व्यञ्जनावृत्तिरवश्यं स्वीकार्येत्यन्यत्र विस्तरेण प्रपञ्चितम्।

सहृदयहृदयानन्ददायिनीं व्यञ्जनावृत्तिमनुमानेनात्मसात्कर्तुमप्रभविष्णुना श्रीशङ्कुकेनान्यानुमीयमानविलक्षणत्वमभ्यधायि। परन्त्वयमास्वादो हृत्स्थमोदकानुमानेन कस्यचित्पुरुषस्य यथा भवति तादृगेव। वाच्यार्थलक्ष्यार्थबोधोत्तरं योऽर्थो बुद्ध्यते स एव व्यञ्जनावृत्तिं स्वीकारयति। सा च व्यञ्जना शाब्द्यार्थी चेति द्विविधा। अत्र केचिदित्थं प्रतिपादयन्ति—

"व्यञ्जनाव्यापारोऽर्थगत एव न शब्दगतः, यतो व्यंग्यार्थस्य शब्देन सह न साक्षात् कार्यकारणभावसम्बन्धः। यस्य कार्योत्पत्त्यव्यवहितपूर्वक्षणे उपस्थितिर्भवति तत्रैव कारणता भवति। व्यंग्यार्थबोधस्य पूर्वक्षणे शब्दोपस्थितिर्नास्ति किन्तु कश्चनार्थ एवोपस्थितो भवति। अतो व्यंग्यार्थोपस्थितिर्वाच्यार्थादेव नियता, सा चोपस्थितिः कमप्यर्थगतं व्यापारं विना न भवितुमर्हति। स च व्यापारो नाभिधा, द्वितीयार्थेन सह वाच्यार्थस्य सङ्केताभावात्। मुख्यार्थबाधाद्यभावाल्लक्षणापि न भवति। परिशेषाद्व्यञ्जनाव्यापार एवाङ्गीकरणीयः। स च व्यापारः शब्देन सह साक्षात्सम्बन्धाभावादर्थगत एव, न शब्दगतः। प्राचीनानां ध्वन्युदाहरणानि समालोच्यायमेव सिद्धान्तः स्थिरो भवति"इति।

परन्त्वेतन्न समीचीनं प्रतिभाति। वसन्तादिरागस्य रसव्यञ्जकत्वं प्रतिपादयद्भिः प्राचीनैः
 शाब्दी व्यञ्जनाप्यवश्यं स्वीकार्या। तन्मूलक एव शब्दशक्तिध्वनिः प्राचीनैरङ्गीकृतः, स च वस्त्वलङ्काररूपत्वाद् द्विधा। तदुक्तम्—'वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा' इति।

ध्वनिकारस्य त्वेतदतिरिक्तं मतम्। ते त्वलङ्कारव्यंग्यस्थले एव शब्दशक्त्युद्भवध्वनिं व्यपदिशन्ति। वस्तुद्वये प्रकाशमाने श्लेषालङ्कारं निगदन्ति। तदुक्तं ध्वन्यालोके—

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥ इति।

"वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः" इति च।

न च ध्वनिकारमते संयोगादिविरहादनियताभ्यामभिधाभ्यामर्थद्वयं वस्तुरूपं समशिरस्कं यत्र प्रत्याय्यते स कामं श्लेषविषयो भवतु, परन्तु यत्र प्रकरणादिनाभिधायां नियमितायामपरस्य वस्तुरूपस्यार्थस्य बोधनं भवति तत्र कथं श्लेष इति वाच्यम्। तादृशस्थले व्यंग्यश्लेषस्य गूढश्लेषस्य वा स्वीकारात्। तदुक्तं कुवलयानन्दे–'अस्त्यन्यत्रापि गूढश्लेषः' इति। पण्डितराजो जगन्नाथोऽप्यस्मिन्नेव मतेऽनुकूलो दृश्यते। तदुक्तं रसगङ्गाधरे—"तस्मान्नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव। प्राकरणिकाप्राकरणिकार्थयोरुपमायां तु सा कदाचित् स्यादपीत्यत्रास्माकं प्रतिभाति" इति। एवं निरुक्तव्यञ्जनयैव ध्वनेः सिद्धिः।

## ध्वनिविचारः

सहृदयानां चेतस्यानन्दं जनयन् प्राधान्येन प्रतीयमानो वस्त्वलङ्काररसात्मकस्त्रिरूपो ध्वनिरित्यालङ्कारिकसिद्धान्तः। न च गुणरीत्यादीनामपि सहृदयहृदयाह्लादकत्वात् कथं न ध्वनित्वम्, यथा कालिदासकाव्ये प्रसादगुणस्य नैषधे वैदर्भीरीतेरिति चेत्; गुणरीत्यादीनां व्यंग्योपकारकत्वेन चमत्कारित्वं न प्राधान्येन, यथा शरीराद्यवयवानां शौर्यादिगुणानां वाऽऽत्मोपकारित्वम्। न च वस्तुत्वेन त्रयाणामपि संग्रहे किमर्थं त्रिरूपो ध्वनिरिति चेदेतेषामुत्तरोत्तरमधिकचमत्कारस्यानुभवसिद्धतया त्रिविधत्वमुचितमेव। तथाहि वाच्यसहिष्णुवस्तुनि स्वरूपतो न चमत्कारिता किन्तु व्यंग्यावस्थायामेव। अतोऽलङ्कारापेक्षया न्यूनचमत्कारित्वम्। अलङ्कारे स्वरूपतो व्यंग्यकृतं चोभयविधं चमत्कारित्वमिति वस्त्वपेक्षयोत्कृष्टत्वम्। सर्वथा वाच्यासहिष्णुरसादौ तु द्वयापेक्षया चमत्कारोत्कर्ष इति। एवं व्यञ्जकेऽपि वस्तुव्यञ्जकापेक्षयालङ्कारव्यञ्जकेऽधिकश्चमत्कारः, तदपेक्षया च रसव्यंञ्जके। अत एव—

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥

इति पद्ये व्यंग्यस्यासुन्दरत्वं वाच्यापेक्षया भवतीति प्रतिपादितम् । यतस्तत्र वध्वा अङ्गावसादो रतेरनुभावतया शृङ्गाररसस्य व्यञ्जक इति वाच्यस्य सुन्दरत्वम् । 'दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्टः' इति व्यंग्यस्य च दुःखातिशयवस्तुव्यञ्जकतयाऽसुन्दरत्वम् । तत्र वस्तु-व्यंग्यं द्विविधम्—वस्तुनो वस्त्वभिव्यक्तिरूपम्, अलङ्काराद्वस्त्वभिव्यक्तिरूपं च । अलङ्काराद्वस्तु नश्चाभिव्यक्तिरूपमलङ्कारव्यंग्यमपि द्विविधं भवति । तत्र वस्तुनोऽलङ्काराभिव्यक्तिस्थले 'अगूढ-मपरस्याङ्गम्' इत्यादिकारिकोक्तैरगूढत्वादिभिर्व्यंग्यकृतचमत्काराभावेऽप्यलङ्कारकृतश्चमत्कारोऽ-स्त्येवेति काव्यप्रवृत्तेश्चमत्काराश्रितत्वात्तत्र ध्वनिव्यवहारो न गुणीभूतव्यंग्यस्य । तदुक्तम्—

व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

न च वस्तुव्यंग्यालङ्कारस्थलेऽलङ्कारस्य चमत्कारजनकत्वेन यथा सर्वदा ध्वनित्वमेव न गुणीभूतव्यंग्यत्वम्, तथाऽलङ्कारव्यंग्यालङ्कारस्थलेऽप्यलङ्कारस्य चमत्कारजनकतया कुतो न ध्वनित्वमिति वाच्यम्; तत्र व्यंग्यालङ्कारापेक्षया वाच्यालङ्कारस्य चारुत्वोत्कर्षनिबन्धनं प्राधान्यं यदि भवेत्तदा न ध्वनेरवकाशः । वाच्यालङ्कारापेक्षया व्यंग्यालङ्कारे चारुत्वोत्कर्षतः प्राधान्यं यदि भवेत्तदैव ध्वनिः । तदुक्तमानन्दवर्धनाचार्यैः—"अलङ्कारान्तरव्यंग्यभावे ध्वन्यङ्गता भवेत् । चारुत्वोत्कर्षतो व्यंग्यप्राधान्यं यदि लक्ष्यते" इति ।

त्रिविधेषु ध्वनिषु प्रधानस्य रसादिध्वनेस्तात्पर्येणैव शब्दार्थयोर्योजना कवेः मुख्यं कर्म । सा योजनैव वृत्तिपदेनाभिधीयते । तदुक्तं ध्वन्यालोके—

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान्यस्ता एता वृत्तयो द्विविधा स्थिताः ॥

तत्र वाच्याश्रयो यो व्यवहारस्ता एताः कैशिक्याद्या वृत्तयः, वाचकाश्रयश्चोपनागरिकाद्याः । वृत्तयो हि ध्वनितात्पर्येण संनिवेशिता नाट्यस्य काव्यस्य च कामपि च्छायामावहन्ति । द्वयोरपि वृत्त्यो रसादयो जीवभूताः । भामहादिभिश्च—

स्वादु काव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटुकौषधम् ॥

इत्यादिना रसोपयोगे जीवातुभूतः शब्दवृत्तिलक्षणो व्यवहार उक्तः । इत्थं निरुक्तनाना-विधध्वनिप्रपञ्चेन काव्यलोकस्य नूतनत्वमित्यालङ्कारिकसिद्धान्तः ।



---

# ध्वनिरात्मा काव्यस्य

कुमारीभक्तिसुधादेवी

यद्यपि नोक्तं स्फुटतया पौराणिकैः शास्त्रानुसारिभिरालंकारिककोविदैस्तथापि व्यंग्यं ध्वननं व्यञ्जना वा काव्यस्य मुख्यांश इति सिद्धान्तः सर्वैरादरणीयः। उक्तं हि ध्वनिकारेण– 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इति। यद्यपि स्पष्टोक्त्या न कुत्रापि स्वीकृतं ध्वननमानन्दवर्धनात् पूर्वं तथापि प्रच्छन्नरूपेणैष प्राप्यत एव कतिपुचित्स्थानेषु।

प्रथमं त्वस्माभिर्ध्वनेः किं स्वरूपमेतदेव निर्णेतव्यम्। यत्र वाच्यार्थमवधीर्य कस्यापि वाच्यलक्ष्योभयभिन्नार्थस्य ग्रहो भवति चित्तचमत्कृतिश्च जायते तत्रैवासङ्केतितो वाच्यलक्ष्यानन्तरं प्रतीयमानोऽर्थो ध्वनिशब्दभाग्भवति। व्यञ्जनाशक्त्यैवाभिधेयव्यतिरिक्तः सहृदयहृदयसंवादसुन्दरः कश्चिन्नवीनो गूढार्थः प्रकाश्यते। उदाह्रियते चाधुनाऽस्य ध्वनेरभिधालक्षणाविलक्षणं रूपम्। गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य साक्षात्सङ्केतितार्थः प्रवाहरूपः, तत्र योग्यताया असत्त्वाद्घोषान्वयस्य बाधः। अतो मुख्यार्थबाधे सति तद्युक्तस्य तटस्यैव ग्रहणम्। किन्तु यदा शैत्यपावनत्वमृदुत्वामलत्वादयः प्रतिपादयितव्यास्तदा अभिधालक्षणे द्वे अपि क्षीणशक्ती। अतः स्वीकृता हि तत्र तृतीया शक्तिर्व्यञ्जनानाम्नी। अनया गङ्गायां घोष इत्युक्ते न केवलं गङ्गातटे घोषो निवसतीति बोधो जायते किन्तु स दिष्ट्या गङ्गायाः शैत्यपावनत्वधीरसमीरवत्त्वादिनापि संवर्ध्यत इत्याकारा बुद्धिरपि भवति। एषा दीर्घदीर्घतराभिधाव्यापारो न, यतोऽभिधा सकृदेवार्थं प्रकाश्यैव निवृत्ता भवति; नहि सा सकलमप्यर्थजातं कुक्षीकर्तुं प्रभवति। अस्ति चेदस्या एवंविधं सामर्थ्यं तर्हि कथं लक्षणापि स्वीकृता? अतोऽयुक्ततया परित्यक्तो हि दीर्घदीर्घव्यापारवादिनां सिद्धान्तः। व्यंग्यार्थबोधस्थले सर्वत्र लक्षणापि न संभवति; यतो नास्ति तत्र मुख्यार्थबाधो न च प्रयोजनमपि। लक्षणायां तु शब्दार्थसंयुक्त एव लक्ष्यार्थो दृश्यते, अत्र तु व्यञ्जनाशक्त्या प्रकरणानुरोधाद् विपरीतार्थोऽपि संपद्यते। लक्षणाया लक्ष्येऽर्थे निष्पन्नेऽपि तस्य नियतत्वमेव। व्यञ्जना तु वक्तृबोद्धव्यकाकुप्रभृतीनां भेदेन भिन्नभिन्नार्थान् द्योतयति, अतस्तत्रार्थानामनियतत्वम्। लक्षणा मुख्यार्थबाधादिहेतुत्रयविशिष्टा, व्यञ्जना तु न तथा। नन्वस्तु

लक्षणाया लक्षणेन व्यञ्जनाकार्यनिष्पादनम् ? तदप्ययुक्तम्। पूर्वमेवोक्तं सर्वत्र व्यंग्यार्थबोधस्थले न मुख्यार्थबाधः। यदि तथापि प्रयोजने लक्षणा क्रियेत तर्हि तस्यापि लक्ष्यतया प्रयोजनान्तरमन्वेषणीयम् । तस्यापि लक्ष्यतया प्रयोजनान्तरमित्यनवस्थादोषसंभावना । अतस्त्यक्ता हि लक्षणालक्षणया व्यञ्जनाकार्यनिर्वहणकल्पना। उक्तं च व्यञ्जनापरिभाषाकाले मम्मटाचार्येण—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥

प्रथमे विद्वांसो वैयाकरणा अपि परोक्षरूपेण ध्वनिं मेनिरे। स्फोट एव सकलानां शब्दानामाकर इति तेषां सिद्धान्तः। स्फोटो वर्णैकदेशोच्चारणमात्रेणैव न प्रकाश्यते। एष वर्णोपगूढः कश्चिन्निरञ्जनो निरवयववस्तुविशेषो यो हि यावच्छब्दस्य प्रथमवर्णोच्चारणादारभ्यान्तिमवर्णोच्चारणं न भवति तावन्न स्फुटति। प्रथमादारभ्यान्तपर्यन्तं वर्णावरणात्यये सति स्फोटो व्यक्तीभवति। अतो वर्णध्वनिना स्फोटः प्रकाश्यते इति बुद्ध्यते। आलङ्कारिकास्तु ध्वनिरिति शब्दं तद्व्यापारजातमपि वैयाकरणेभ्य एव गृहीतवन्तः। तस्मादभिधालक्षणाभिन्नोऽतिक्रमनीयतारमणीयः सहृदयहृदयसंवेद्यो रसादिव्यञ्जको व्यापारः समुदपादि। उक्तं हि ध्वनिकारेण—

तद्वत् सचेतसां पुंसां वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वावबोधिन्यां झटित्यर्थोऽवभासते ॥

नाङ्गीकृतो हि दार्शनिकैर्ध्वनिः । किन्तु सम्यक्प्रणिधाने कृते तैरपि गुणीभावेन व्यञ्जना स्वीकृतेति ज्ञायते। सतोऽपि घटस्य प्रदीपालोकेनैव दर्शनात्। अत्रापि (काव्येऽपि) वाच्यार्थमूलो ध्वनिः प्रदीपालोकवद् वाच्यार्थमपेक्षते। (लक्षणायां वाच्यार्थः परित्यज्यते। अत्र तु वाच्यार्थविद्यमानत्वे न कापि बाधा। केवलमर्थः किमपि नवीनं रूपं गृह्णाति) अतो ध्वनिर्न केनापि तत्त्वतोऽवधीरितः। सन्ति हि केचिदप्रौढशेमुषयो ये सन्तमपि ध्वनिमजानन्तो नास्ति ध्वनिः। अथवा स्थितो हि ध्वनिर्गिरामविषय इति वदन्ति। प्रौढविचारस्त्वीदृशी मुक्तिं न सहते।

तथाविधो ध्वनिरेव काव्यस्य सारो यतोऽनेनैव काव्यं प्रकर्षमापद्यते। उत्तमकाव्यस्य ध्वनिरेव निकषः। वाच्यादतिशायिनि व्यङ्ग्ये उत्तमं काव्यमिति कथितं हि काव्यप्रकाशे।
 यत्र व्यङ्ग्यार्थो मुख्यतया हृदयमाह्लादयति तत्रैव सत्काव्यस्य गणना। यत्र व्यङ्ग्यार्थस्तनिमानमाभजते इतरार्थश्च सचमत्कारो भवति तद् गुणीभूतकाव्यम्। परिगणितं चैतन्मध्यमकाव्य-

कोटयाम्। अवरमधमं वा काव्यं शब्दार्थचित्रमयम्। वक्तृबोद्धव्यकाकुप्रभृतिभेदेन नवनवार्थ-ग्राहकेण व्यङ्ग्यस्य माधुर्यमतुलनीयम्। व्यङ्ग्यार्थहीना कविता नीरसा, यतो रसेन व्यङ्ग्यहीनेन कथमपि न भूयते। कविताया आह्लादजनकत्वमपि रसव्यतिरेकेण न सम्भवत्यतः प्रधाने व्यङ्ग्य एव काव्यस्य आत्मत्वमारोपितम्।

ध्वनिसम्प्रदायस्यैतावदेव माहात्म्यं यदत्र कोऽपि सम्प्रदायो नावज्ञातः। ध्वनिरात्मत्वेन गृहीतः, रीत्यवयवसंघटना, अलङ्कारश्चात्र हारादिवच्छोभते। ध्वनिः केवलमात्मत्वेनैव न गृहीतः किन्त्वेष देहावयवादिव्यतिरिक्तो लावण्यविशेष इव काचिन्माधुरी सम्पदिति कथ्यते। यथोक्तं ध्वन्यालोके—

'यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।'

रसो हि काव्यस्य माधुर्ये हेतुरिति स्वीकृतं हि सर्वैः। स च ध्वनिशब्देन व्यवह्रियते उपभुज्यते च। उक्तं हि लोचनेन—'स च काव्यव्यापारैकगोचरो रसध्वनिः' इति।

सर्वत्रैव वाच्यार्थाद् व्यङ्ग्यस्यैव प्राधान्यं माधुर्यं हृदयग्राहकत्वं च स्वीक्रियते। वैदेशिक-साहित्येऽपि एष समधिकमादृतः। नवनवोन्मेषशालिनीं प्रतिभामङ्गीकृत्य कवयो यदि वाच्यार्थ एव यतेरन् तर्हि को भेदः कव्यकव्योः? व्यङ्ग्यः सर्वत्रैव सौन्दर्यसम्पादनहेतुः। न कस्मै रोचते उक्तिरेषा—

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम्॥

अथवा

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः।
अहो दैवगतिः कीदृक् तथापि न समागमः॥

यदि कालिदासकविरनेन प्रकारेणानुक्त्वा केवलं जलदस्याद्रिसंयोगाज्झटिति जलपरि-णतिं साधारणोक्त्यैव वर्णयेत्, यदि च गोधूलिसमयेन दिवारात्र्योः पृथक्त्वं याथातथ्येनैव वर्ण-येत् तर्हि किमेतत् कमपि वैचित्र्यमावहेत्? अतोऽलौकिकचमत्कारजनकत्वात्प्रकृष्टानन्दस्वरू-पस्याभिव्यञ्जकत्वात्प्रकृष्टतमशक्तिमत्वाच्च ध्वनिरेव काव्यस्यात्मेति स्वीकृतम्।

यदुक्तं गिरामविषये स्थितस्तदपि नायुक्तं यत एष सहृदयसंवेद्य एव ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

अनेन यः शोको ध्वन्यते स किमरसिकैर्बुध्यते ? तथापि स्थलविशेषे व्यक्तिविशेषस्य वा बोधो न भवतीति हेतुना कस्यापि वस्तुनोऽस्तित्वास्वीकरणमनुचितम् । तमसि यदि घटो न दृश्यते तददर्शनं किमविद्यमानप्रयुक्तम् ? यद्येवं न, तर्हि कथं नास्ति ध्वनिरिति कथ्यते ? अतः स्वीकर्तव्यं हि सर्वैः काव्यस्यात्मा ध्वनिरिति ।

---

# कल्पनाविलासः

श्रीमहादेवशास्त्री

कविः कस्मै स्पृहयति श्लाघते च, किमवलम्बते शृणोति च, कुत्र विश्राम्यति मोदते च, केन संश्लिष्यति स्निह्यति च, कस्याध्येति नाथते च। अथवा सर्व एवात्र प्रसीदति, निखिल एवैनमनुधावति, विश्व एवेमं रामणीयकं दर्शयति, कृत्स्न एवामुं रसमुपभोजयति लोकोत्तरम्, सृष्टिरेवान्यथा भूमिकामारोहति प्रजापतेरेतस्य, जगदेव कमपि परिणाममासादयति ह्लादमयं निर्वर्ण्यमानममुना। किं बहुना, पाषाणोऽपि पीयूषं प्रवाहयति, मरुभूमिरपि नन्दनवनीयति, सरस्यपि सागरायते, काकोऽपि हंसायते, महीधरोऽपि समुड्डीयते, रजकोऽपि शक्रायतेऽनेन काव्यकलालङ्कर्मीणेन परिष्क्रियमाणः। अयं कार्मणः सहृदयानाम्, वैकटिकः प्रकृतिरत्नानाम्, स्थपतिः समावर्जकानाम्, नीवी प्रतिभानाम्, निधानं कौतुकानाम्। स्पर्शमणिनायसमिव सकलमनेन विभाव्यमानं हिरण्यधुरामञ्चति, ऐन्द्रजालिकेन प्रेक्षकलोक इव प्रेर्यमाणः सचेतोव्यूहः कल्पनाकुशलेनामुना यद्यथा निरूप्यते समभिभाष्यते तत्तथा निरूपयति समभिभाषते च। सोऽयम् अमहापोतोऽपि रत्नाकरानुद्वेलयति, अनण्वस्त्रमपि विचित्रं परिवर्त्तं जनयति, अविमानोऽपि शश्वत्सर्वतो दिशः प्रसरति, अदूरवीक्षणमपि दवीयसो निभालयति।

प्रकृतिदर्शनविलक्षणसक्षणः सोऽयं कविविचक्षणः कश्चित् कदाचिद् दयितपरिभ्रमणः समासीत्। अभूद् ग्रीष्मऋतुः। अभविष्यदूष्मतापः समधिकः। भगवान् भास्करः समग्रैः प्रचण्डैः किरणैरतप्स्यत्। पांसुला च प्रखरा च भूमिर्ज्वलदङ्गारनिभै रेणुभिरधक्ष्यज्जङ्गम्यमानान् जन्तून्। सद्यस्तरां रूपान्तरमुपगतः पवनः प्रबलसन्तप्तझञ्झाभिर्भस्मसादकरिष्यत् स्पृश्यमानान् प्राणिनः, यदि न मध्ये मध्ये जलधरः समुदभविष्यत्; न व्यधास्यद् वर्षैः प्रशमं जायमानस्योग्रतापस्य।

इत्थं व्यतिकरे जाग्रति कविर्महाभागो दक्षिणेन रीवाँदुर्गं विन्ध्यमिवोद्ग्रीवमात्मानमन्तर्धाय वसन्तं सुहृद्भिः सहृदयैः परिवृतो बाष्पशकटीमारोहन् राजमार्गेण सरलेन तिरश्चीनेन च २७
परिभ्रमन् प्रदेशं कमपि समापत्। यं पर्वतमाला नात्युन्नताः कयापि सुषमया विभूषयन्त्यो नात्मनि

मान्तीव ; वन्या अपि कन्या इव तासां पलाशैः पालाशैः सुमनोमनोहरैः संभारैः फलैः कवलैरिवानल्पैरातिथ्याय सदोन्नमद्भिः सातिशयैरलङ्कारैरिव शोभमानाः शोभामनारतं तन्वाना अमुमुपगुह्यावतिष्ठन्ते । यत्र क्वचित् खेटखर्वटपुरग्रामव्रजा महार्हा महनीयतां मेदुरयन्ति सस्यैः प्रशस्यैः प्रसृमरपरिसराः । क्वचित् सरितो वर्षास्वेवोत्तीरनीराः साम्प्रतं समन्ततो रिक्ताः शतशो मृगमरीचिकासलिलतृष्णास्पदसैकतचाकचिक्याकलिता अनवहीनां दशां विस्मारयन्ति । क्वचित् काश्चित्ता एव प्रवहन्त्यः सतृष्णगोगवयमहिषमृगसूकरभल्लूकव्याघ्रप्रभृतिजन्तुपीयमानपानीया हरितपर्णपादपलतागुल्मशष्पश्यामलविकटतटा गुणं कमपि प्रगुणयन्त्योऽजस्रचतुरस्ररुचिराश्चञ्चूर्यन्ते ।

तस्य महामहितमहिम्नः प्रदेशस्य त्रिदशालयदेश्यस्य मध्ये सौभाग्यमिवोर्वरितम्, पुण्यमिव सञ्चितम्, शोभावैभवमिव पुञ्जीभूतम्, अस्ति लोकलोचनैकदृश्यं सरः । तच्च पातालादिवोद्भूतं स्रवन्तीभिरिव तत इतः प्रद्रवन्तीभिः स्वयमेव संभावितम्, मघैरिव जलवलदर्शनकामनया प्रपूरितं विराजते । अत्यायतमतिदीर्घमतिदवीयःपारावारमालं भूतलमतिरिच्य सुदृढाचलकल्पबद्धमहाबन्धं तद्विस्मयमिवोपजनयति, प्रथमं पश्यतां दृश इवादत्ते, हृदयमिव प्रविशति, वैचित्र्यमिव सृजति । उच्चैर्दृश्यमानान् पर्वतान् प्रासादानारुह्य प्रकृतिरिव तदीयं सातिशयं लावण्यं निध्यायति, वनदेवताश्च वृक्षशाखाशिखरस्थितास्तत्रत्यानुच्छलत्तरङ्गभङ्गान् मौक्तिकगुच्छसहस्राणीव वारिबिन्दुनिकरान् विकिरतो विलोकयन्ति । मरुतश्च झम्पासंपातायाता द्रुमैर्वल्लीभिश्च पुष्पोपहारैरुपहृता विशालमहीधरावरोहणश्रमभरमन्थरा इवात्युक्षीमिव वीचिभिर्विरचयन्तस्तत्र सलिलक्रीडामातन्वते । बन्धमभितो विकसिताः सितपीतरक्तकरवीरकेतकमल्लिकामतल्लिकापाटलाश्चञ्चच्चञ्चरीकचक्रझङ्कारभरिताः कोकिलकलकूजिताः सहकारमधूकवकुलकदम्बजम्बूनिकुरम्बाः खगगणरमणीयास्तदीयां महतीं श्रियमुद्भासयन्ति । कमलानि कह्लाराणि कैरवाणि इन्दीवराणि शैवालानि च मध्येहृदं राजितराजीनि समरन्दसन्दोहानि ससौरभसंभाराणि भृङ्गसङ्गीतसङ्गतानि जलकुक्कुटकलरवकलितानि वरुणमिवार्चयन्ति, तदन्तर्मन्दिराजिरं पद्मयामिव पूजयन्ति, निजाधिदैवतं भगवन्तं मरीचिमालिनमिवोपासते नित्यविकसनोपकारपारायणिकम् ।

तस्यैकतः पार्श्वे रीवाँराजशिरोमणिभिः कविकलाकलापपारावारीणैः श्रीमन्माननीयमूर्धन्यरघुराजमृगराजैः सन्निर्मितः श्रीमद्वेङ्कटरमणसिंहैरपरैर्वीररसावतारैरिव चञ्चच्चारित्रलक्ष्मीविलासैर्भूयः समुत्सेधितः क्रीडागृहमिव विलासश्रियः, अन्तःपुरमिव मदनस्य, विभूषणभवनमिव श्रृङ्गारस्य सौधो गोविन्दाभिधो वरीवर्त्ति । यत्र स्नानप्रसाधनविहारभवनानि, दर्पणमयं वेश्म,

चौर्यनिधुवनहर्म्यम् , नानाप्रसाधनानि, नाना वेत्रासनानि, नैकधा शार्दूलमृगकृत्तिनागदन्ताः, जलान्तःक्रीडागारं च रमणीयतामतिपीनामावहन्ति । मध्येसलिलं भगवन्मन्दिरं च विलक्षणां कमनीयतां प्रद्योतयति । अपरतः शशिकुञ्जं वर्त्तमानस्य नरपतेः श्रीमार्त्तण्डसिंहमहोदयस्य शशीव धवलं लध्वपि मनोहारि शान्तमपि समाकर्षकं करोति कौमुदीं भूमिष्ठाम् । इत्थं महितमहिम्नः शोभानिधानस्य तस्य प्रदेशस्य प्राणमिव प्रस्फुरन्तं कमनीयताकदम्बकमिव सविग्रहं रीवाँराजकस्य कृत्यसारमिव नीरतां गतं विलोकयतस्तस्य कवेः समभून्मनसि जागरितं कल्पनया समुच्छलितं प्रतिभाप्रवाहेण—

"वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्" इति ।

---

# हैमसमाधिः

सौ. क्षमाबाईराव

दिवसोऽप्यवसितप्रायः। अस्तं गमिष्यतो भगवतः सहस्ररश्मेररुणरश्मिभिश्चुम्बिताग्राणि हिमच्छन्नान्युच्चोच्चशिखराणि हिमाचलस्य विविधधातुमयदीप्त्या देदीप्यमानानि नानाविधरत्न-खचितानीव विदूरात्प्रतिभान्ति स्म। नगाधिराजोऽयं वगाह्य पूर्वपश्चिमौ वारिनिधी भूमेर्मान-दण्ड इव पूज्यमानस्तिष्ठतीति कवीन्द्रस्य सूक्तौ प्रेक्षकस्तं दर्शं दर्शं कथं न प्रतीतो भवेत्।

अस्ति निविष्टं मणिमयगिरिमेखलायाः किष्टिवाराख्यग्रामस्य च मध्ये क्वचिद्विविक्तस्थले कुटीरमेकं ग्रामीणस्य कस्यचित्। प्रदोषेऽस्मिन् काचिद्रूपयौवनसम्पन्ना हिमानाम्नी युवतिः सृष्टि-सौन्दर्यमालोकयन्ती कुट्या बहिश्चिनारनाम्नस्तरुविशेषस्यालवालं परितो रचितायां वेदिकायामुप-विष्टासीत्। दरीदृश्यते तस्याः पुरो नीलपुष्पनिकरावृतपर्वतस्यैकस्य पर्यन्तं कुटिलः पन्थाः, यः शालि-क्षेत्रमारभ्य कारवाहोगुल्मेष्वन्तर्हितस्ततश्च पुनः सुदूरं दृष्टिगोचरो भवति। नेदीयसः परश्शतपादा-यतस्य गिरेरधस्तात्सुदूरं प्रसृतः प्रचण्डो जलप्रवाहः प्रतिबध्नतः प्रस्तरान् संघट्य फेननिकरो-द्गारभासुरो निर्झरझर्झरनिनादेन दिगन्तमापूरयन्निवासीत्। आस्तामुभावपि पार्श्वौ पर्वतस्यावृतौ नानाविधपुष्पितवन्यगुल्मैर्नन्दनवनरमणीयताविडम्बिभिः। अतिमनोहरं हिमालयस्याद्भुतसौन्दर्यं दर्शं दर्शं विस्मृत्यात्मानं हिमा गाढं निमग्नेव तस्थौ। सर्वतः शान्त-ताधिदेवता व्यराजत। समयेऽस्मिन् गगनचुम्बिशिखराः सुराह्वयद्रुमाः पर्वतीयप्रदेशस्य दिग्रक्षका इव निश्चलाः सावधानमिव तस्थुः। गन्धवाहो निरुच्छ्वास इवास्त निःशब्दः स्तब्धश्च। अथ यावत्तरुणी दीर्घं निःश्वसिति तावत्तस्या माता पृष्ठतः समुपेत्य तारस्वरेण पप्रच्छ। हिमे, अयि किं चिन्तयसि वचनं सर्वथा तस्य मूढमतेस्तापसस्य श्रीनगरनिवासिनः। सहसाऽऽसनात्समुत्थापि-तेव हिमा परावृत्य परिणतवयस्कां कृशाङ्गीं निजजननीं कुटीरान्निर्गतामद्राक्षीत्। दत्तप्रत्यु-त्तरेङ्गितेन पुनरसंख्यवर्णरञ्जितक्षेत्रविस्तारस्य निरूपणे हिमा व्यापृता समभूत्। स्थविरा च

 दुहितुरन्तिकमुपविश्य ताम्बूलं चर्वन्ती व्याहरत्—अये, निमित्तज्ञोऽयं धर्मकञ्चुकीति निश्चिनोमि। किमनेन तस्य संदेशेन च। हन्त, तस्मिन् विश्वसत्या त्वया समाकृष्टासीयद्दूरं महारण्यम्।

हिमा—मातः, किमिति वृथा तापसमुपालभसे।

वृद्धा—अपि तेन सनिश्चयं ज्ञापितासि तव पत्युरम्बुजस्य संकेतस्थानमुद्दिश्य। अम्बुजस्य वृत्तोपलब्ध्यै गतवत्यहं सह त्वया तत्सविधे, न पुनस्तद्विचित्रमुखावलोकनाय। आः, वञ्चक एवासाविति सतिरस्कारमुक्त्वा नासिकया सा नस्यचूर्णमाददौ।

हिमा—मातः, उक्तमेव तत्तेन यत्'''इत्यर्धोक्तवचसो व्यरमत् तरुणी।

वृद्धा—किं नाम व्याहृतं तेन। पुण्यम्—पुण्यमेव सिद्धिप्रदम्। (सोपहासं विडम्बयन्ती) यथा यथाधिकं कष्टं पुण्यवृद्धिस्तथा तथा। नैतदम्बुजस्योदन्तस्य कमप्यंशं व्यनक्ति।

हिमा—तथापि तापसस्य संदेशेऽस्मिन् कोऽप्याशाङ्कुरो व्यज्यते खलु।—इति सा चुम्बितनिष्प्रभधूसराम्बरतलान् देवदारुद्रुमान् जोषं विलोकयन्ती समुदैरयत्।

वृद्धा—वत्से, का नामाशा ? अपीदममरनाथस्य हिममन्दिरं प्रति प्रयाणं संगमयिष्यति त्वां सममम्बुजेन ? व्यतीतं खलु वर्षपञ्चकं तस्य प्रयातस्य गृहात्। पितापि तस्य त्रिंशे वर्षे परिभ्रमणासक्तो भार्यां मासजातापत्यं च विसृज्यामरनाथयात्राबद्धादरो गेहान्निर्गतः सन् न पुनर्निवृत्त इति श्रुतमासीदस्माभिः। गेहिनी तस्यानवरतनयनाम्बुधारा वर्षन्ती शोकानलेन प्लुष्टेव स्वशिशुं प्राहिताम्बुजनामकं तदानीमेकाब्ददेशीयं कस्मैचित् सुहृदे समर्प्य दिवं गतवतीत्यपि सुविदितमेव नौ।

हिमा—परं पर्यटनासक्तिः पित्रा प्रेरिता तस्मिन्निति तत्पूज्यतातपादेषु दोषमारोपयितुं नोचितम्। अपरं च विदितमेव ते यच्चिरात्तिरोहितस्य पितुरन्वेषणैकधिया प्रस्थितो हिमाचलं प्रति तव जामाता, न तु विहारसुखोपभोगाय न वा पर्यटनासक्त्या।

वृद्धा—प्रवृत्तिरीदृशी वंशपरम्परागतास्तीति न संदेहः। हिमे, सुप्राहितनाम्नी त्वमपि हिमगिरिमारोढुमिच्छसि नष्टस्य पत्युर्गवेषणायेति न विस्मये।

हिमा—अम्ब, किमित्येवं ब्रवीषि। वेत्सि त्वं यदस्य पुनर्दर्शनस्य नास्ति स्तोकमप्याशा। आध्युपशमनार्थमेव यात्रेयं मयि जिगमिषां जनयति। व्यतीतेषु पञ्चसु वत्सरेषु प्रतिक्षणं विरहजन्यमसह्यदुःखं सोढवत्यहम्, इदानीं तु गलितधैर्या संजातास्मि। मानसव्याधि-

मुपशमयितुमनेके उपायाः कृता अस्माभिः, परं सर्वेऽपि निष्फलत्वमेव याताः । तस्मादेव श्रीनगरे तापसस्योपदेशोऽभ्यर्थितो मया ।

इत्यभिधाय श्वासस्थैर्यार्थं मुहूर्तं विरम्य पुनरुपाक्रमद्वक्तुम्—

हिमा—अम्ब, पर्यटनमिदं प्रशान्तिं मे प्रदास्यतीति नास्ति संदेहलेशोऽपि ।

वृद्धा—परं पुण्यस्य कः सम्बन्धोऽत्र ।

यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथा ।
पुण्यं हि सात्त्विकं नूनमशक्यमपि साधयेत् ।।

इति भविष्यवादिनं तापसं विडम्बयन्ती मुखविकृत्या क्रियासमभिहारं तद्वचनं प्राजल्पत् स्थविरा ।

हिमा—मातः, जानासि यन्नास्ति पुण्यादन्यत्किमपि महत्तरम् । ध्यानतपोव्रतादिक्लेशोत्तरमधिगतात्पुण्यान्माङ्गल्यमेवोद्भविष्यति । अपरं च पञ्चवर्षेभ्यः प्राक् श्रीमदमरनाथक्षेत्रादेवाम्बुजस्य प्रथमं पत्रं समासादितमासीन्मया ।

वृद्धा—कञ्चित्कालमुषित्वा च तत्रास्मिन् जन्मनि समं वल्लभेन संयोक्ष्यसे पुनरिति तव विश्वास उपहासास्पदं खलु ।

हिमा—को जानीते ।

वृद्धा—वत्से, वृद्धाया मे वचः शृणु तावत् । अतिशैत्यादावां न यावच्छिलायिते भवावस्तावदेव श्रीनगरं निवर्तावहै ।

हिमा—( सविस्मयम् ) कथम् । इयद् दूरमागत्य निवर्तिष्यावहे ?

वृद्धा—( असन्तोषस्वरेण ) हन्त, मार्गक्लेशबाहुल्यस्य नाल्पिष्ठमपि व्यतर्कि मया प्रयाणात्पूर्वम् । उपत्यकाया अध और्णवस्त्रजातभारवाहकस्योरणस्य पतनादारम्य शैत्यात्

 शकलीभूतास्मि । को जानीते कीदृशी घटना घटेत पथीति । अपरं च समयेऽस्मिन् विशेषतः श्रावणमासे यात्रिकाः परस्सहस्रं पुण्यक्षेत्रं समागता विकिरिष्यन्ति सर्वत्र मालिन्यं व्याधि निर्भरं

च । एतद्देशीयवायुजलादिकं नानुकूलं तवेति प्रत्यहं कृशिमानमापद्यसे विवर्णा च संजातासि । अतः स्वदेशं प्रतिनिवर्तावहै शीघ्रम् ।

हिमा—मातः, प्रोक्तमेव मयाऽसकृद्यन्न कोऽपि जगतीतले मत्प्रतिज्ञां मिथ्या कर्तुं प्रभविष्यतीति । तस्मादलं निषेधकवचोभिः ।

वृद्धा—( किञ्चित्कुपिता ) मूढासि त्वं यत्पराधीनेऽपि विषये एवंविधा प्रतिज्ञा कृता त्वयेति । अतो गम्यतामेकाकिन्यैव । निवर्तिष्येऽहमितः श्रीनगरम् । नाहं व्याहन्मि तवोत्साहम् । ( मुहूर्तं विरम्य ) परिभ्रमणावेशप्रवृत्तिं पैतृकधनमिव आप्तवानम्बुजः, परं कस्मात्त्वयाधिगतेयमिति न जाने ।

अथ मातृवचनमाकर्ण्य किञ्चित् स्मिताननाऽप्रहतोत्साहा तरुणी तूष्णीकां वितस्थे । अथ परेद्यवि भानूदयात्प्रागेव विसृज्य शय्यां विना जननीं प्रस्थातुंप्रावर्तत हिमा । ह्रस्वकायस्त्रिविष्टपदेशीयः कश्चित्तस्याः पोट्टलिकामावहन् स्कन्धे तत्पृष्ठतोऽन्वसरत् । प्रस्थानसमये मातरमियं यदाह्वयत्तदा तस्यै प्रदायाशीर्वादं वृद्धा तूष्णीं तस्थौ । परस्तात्कुटीरस्य द्वारदेहल्याः प्रयान्तीं कन्यामादृष्टिपथगतां प्रेक्षमाणा स्थितवत्यासीत् ।

अथानेकाहस्सु चिनारदेवदारुसुराह्वयादिद्रुमव्याप्ते महारण्ये पर्यट्य यावदेकदाऽपराह्णे चेनाबनामकं रज्जुनिर्मितसेतुं समासदत् । समागत्यात्र कस्यचिच्चिनाराख्यतरुविशेषस्य प्रच्छायशीतले तले निजं शयनीयं ।वस्तृत्य कञ्चित्कालं विश्रान्तिसुखमासेवत । पराह्णस्य मान्थर्येण व्याप्तं गन्धवाहं निर्मलं परिमलमयं च निःश्वसत्यै सपदि तस्यै निद्रादेव्या सुस्वापसुखमदीयत । घटिकोत्तरं प्रबुद्धा शय्यां निबध्य पुरः प्रयातुं यदा सा प्रवर्तते तदा मार्गदर्शकस्तस्यै चिरक्षुण्णवर्त्माऽङ्गुल्या निर्दिश्याब्रवीत्—अनया पदव्या गन्तुमर्हति श्रीमतीति । परं श्रीनगरनिवासिनस्तापसस्य संदेशो यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथेति तस्याः श्रुतिशष्कुलीमपूरयत् । तद्वचने बद्धविश्वासा च सा शिरः कम्पयित्वेङ्गितेनैव मार्गदर्शकस्य सूचनां निराकरोत् । सङ्कटाक्रान्तेन पथा जिगमिषोस्तस्या निश्चयं विदित्वा साश्चर्यं तस्यां बद्धदृष्टिः क्षणं निरुत्तरः स्थित्वा त्रिविष्टपदेशीयः प्रत्युवाच—भगवति, पुरो गन्तुमक्षमोऽस्मि, पादव्यथा हि मां पीडयतीति । २८३
यथेच्छं विधेहीति तं प्रोच्य युवतिः पोट्टलिकामंसे समारोप्य रज्जुनिर्मितसेतुमतिक्रमितुमुपाक्रमत् । ततश्च पर्वतश्रेणीतः पर्वतश्रेणीम्, अटवीतोऽटवीम्, शिखराग्राच्छिखराग्रम्, अधित्यकातोऽधित्यकाः

समुल्लङ्घ्य पुरतो दरीमेकामत्यगाधामधस्तनीमालोक्य तस्या मस्तके कोऽपि झङ्काररवः समुदित इवाभात्। एकमात्रः स्खलितपादोऽस्मादान्दोलद्रज्जुसेतोर्मा प्रचण्डप्रवाहसिन्धौ तस्मिन् प्रसभं पातयेदिति विभावयन्ती सा स्विन्नगात्री सवेपथुः समजनि। ततश्च परमात्मनः परमकरुणामेवावलम्बनं प्रतिपद्य परेशस्यागाधमहिमानं च ध्यायं ध्यायमगणिताध्वक्लेशवन्यसत्त्वभयादीन् विगणय्य कुटिलवर्त्मनैव निर्भयं सनिश्चयं प्राचलत् प्रगल्भेयं तरुणी। देवदारुद्रुमैर्गाढमाच्छादिते महारण्येऽस्मिन् तत्पादविन्यासशब्दमन्तरा न कोऽपि ध्वनिरश्रावि। प्रदेशोऽयमत्यन्तभयावह इति यात्रिकैर्वर्जितप्रायोऽभूत्। क्वचिद्रोमायुस्तरुगुल्मान्निर्गत्य तां न्यरूपयत्, ततश्च भयोद्विग्न इवात्मनोऽभिरिरक्षिषया द्रुतं पलायितः। अभ्रंकषपॉप्लरनामकानां फारसीदेशोद्भवतरुविशेषाणां मुगलसाम्राज्यकालमारभ्य सर्वत्र कश्मीरेष्वारोपितानां श्रेणिः, निबिडतमच्छायायां पिशाचपङ्क्तिरिव घोरलास्यं कुर्वाणेव व्यभासीत्। हिमा तु निर्भयमूर्ध्वोर्ध्वमारोहत्। पृष्ठतस्तस्याः पुरतश्च तस्थुरुच्चोच्चश्रेणयोऽत्यन्तविशालहिमाद्रेर्नितम्बानाम्। क्वचिद् द्विरेफस्य झङ्काररवे तस्याः श्रुतिसरणिं निपत्य पुनर्विरते तस्मिन् प्रशान्तता प्रासरत्।

पर्यन्ते बहुतिथकालावसानमुदञ्चति मरीचिमालिनि तुहिनाद्रेर्दरी या कुक्षिनिवेशितास्ति श्रीमदमरनाथगुहाया बहिःस्थाधित्यका सा दृष्टिगोचरोऽभूत्। ततो यावत् पिसुनाम्नः शैलस्योत्सङ्गं स्मयमानशेषनागाख्यसरोवरमवलोकयन्त्यधित्यकां समुपैति सा, तावद् वृहदक्षोटद्रुमस्याधो ध्यायन्तं कञ्चित्तापसं वृद्धं व्यलोकयत्। प्रदोषस्येधमानान्धकारे निष्प्रभनीललोहितपर्वतच्छायाभिर्घनीभूते स प्रवया जीर्णपर्णमिव वलितपीतवर्णास्य आनाभिविलम्बमानसितसान्द्रकूर्चो भस्मधूलीरूषितजटाजूटकोऽशिथिलाकुञ्चितगात्रो दाक्षिण्याङ्कितललाटो भद्रतयेव स्नातशरीरो भ्रूमध्यस्थापिताचलदृष्टिः शताधिकवर्षदेशीयः पुरातनकालप्रतीक इव समुदलसत्। हिमायाः पदन्यासशब्दमाकर्ण्यायतद्योतमानं नयनयुग्ममुन्मील्यान्वयुङ्क्त ताम् वत्से–कुतः प्रतिपन्नं त्वयेदमतिक्लेशकरं प्रयाणम्। इत्यनुयुक्तया युवत्या तस्य तेजस्विमुखमण्डलं निपुणं निरीक्षमाणया श्रीनगरकृतावासस्य तापसस्य संदेशो निवेदितस्तस्मै। योगीन्द्रोऽभिनन्द्य तत्संकल्पं तस्यै मेषदुग्धफलाद्युपहारं व्यतरत्। ततश्चेङ्गितेन साङ्गुलिनिर्देशं समीपवर्तिनीं निम्नपटलां निजकुटीं तस्यै स निर्दिष्टवान्। सव्रीडं दोलायमानमानसामेनां साग्रहं समार्दवं चाभाषिष्ट–बाले, प्रविश्यतां कुटीरमिदं निर्भयमाप्रातश्च विश्रान्तिसुखं सेव्यतामिति। तत्कारुण्येन प्रफुल्लहृदया तरुणी प्राविशत् कुटीम्, विस्तृत्य चास्तरणं भूमौ सपदि गाढनिद्रया गृहीताभूदानिशीथम्। ततश्च गवाक्षान्त-

निविष्टसुधाकरकरचुम्बितानना जागरितेयं शय्यां विसृज्य कुटीराद्वहिः स्थित्वा कौमुदीदुग्धप्रवाहपूरधवलितं काननमालोकयन्ती विधातुः सृष्टिचमत्कारेण परवशीभूतासीत्। कुट्याः स्वामी योगीन्द्रः पूर्ववच्चिनारपादपस्याधो भगवद्गतेन मनसा विस्मृतदेह इव चन्द्रालोकसौन्दर्यं कदाप्यनवलोकयन्निव विगतचेतन इव निमीलितलोचनः समवस्थितः। तस्य समाधिविच्छेदो मा भूदिति मन्दमन्दं कानिचित्पदानि गत्वा कस्यचिद्विशालवृक्षस्याधःशिलायामुपविश्येयं कतिपयघटिका यापयामास। बृहत्तमप्रत्यन्तपर्वतानां हिममयशृङ्गाणि कश्मीरजवर्णकान्त्या हिमांशो रजतरश्मिभिश्च देदीप्यमानानि शुशुभिरे। मरकतनीलेऽस्मिन् शेषनागसरोवरे रजन्या ध्यानपरा वृत्तिः प्रतिबिम्बिताऽऽसीत्। आलोकस्यात्यद्भुतरमणीयत्वपराधीनायास्तस्या विचारसरण्यां समापतत् स्मरणं चिराद्व्यतीतानां वर्षाणाम्, स्वभर्तृसनाथीकृतस्वगेहस्य, आत्मीयस्वल्पकालस्थायिवैवाहिकजीवनयात्रायाः, पञ्चाब्देभ्यः पूर्वे संवृत्तस्याम्बुजस्य प्रस्थानस्य मन्दिरात्। ततश्च जन्मान्तरानुभवारूढेव आभासमयतामापद्यमानेव तस्याः स्मृतिर्मुहूर्ते ग्लानिमभजत। अपारविलक्षणचिन्तार्णवोर्मिलोडितमभून्मनस्तस्याः। व्यचिन्तयच्च–यदि तस्यां प्रचण्डदर्यामम्बुजः सरभसं चिरात्प्रलीनः स्यात्ततः किम्? इत्याकलयन्त्यास्तस्याः पक्ष्मपङ्क्तियुगलं बाष्पोद्गारेण सिक्तमिव, रोमाञ्चकण्टकितमिव शरीरमभूताम्। करुणासागरकल्लोलैराकृष्टाया मनस्तस्या विषादगण्डशैले न्यस्यत। अकल्पयच्चाकाण्डं सा यत् श्रीनगरनिवासिनो भविष्यज्ञस्याकृतिः स्वदृक्पथे निपत्य क्षणाद्देवदारुद्रुमाणां पृष्ठतः समुत्प्लुत्य झटिति पाण्डुवर्णविभावर्याश्छायायां क्षणं दृश्यमाना पलाशिनां मण्डलेषु विलीनेति। दूरस्थाधित्यकातस्तस्य स्वरप्रतिध्वनिरश्रावीति च सा व्यभावयत्। भावनेयं तु क्षणिकस्वप्न इव विनष्टाऽभूत्पुनश्च गाढनिःशब्दता शर्वर्याः सर्वतः प्रासरत्। शीतशीतोषःकाले योगीन्द्रं पूर्वेद्युरिव ध्यानावस्थितमद्राक्षीत् सा। संध्यायामस्यान्तरायो मा भूदिति यावत्सा पुरश्चलितुं प्रवर्तते तावन्मुनेर्नयनयुगमुन्मीलितं वलिनाननेन चास्य किञ्चिन्मन्दस्मितमाविरभूत्। कृतज्ञताभरपुरस्सरमापृच्छन्तीं युवतिं मुनीन्द्रोऽभाषिष्ट–वत्से, याहि पुरः। शश्वत्स्थास्यति तव पुण्यम्। भूयाच्छिवं ते। आशीर्वचो वितरन्तु ते देवाः। इत्युदीर्य भानूदयं प्रति समुन्नमिते तस्य क्षीणक्षीणानने पूर्णशान्तता व्यासङ्गश्च व्यराजेताम्। न चिरात्पिहितलोचनस्य तस्य मुखमण्डलं समीक्षमाणा सादरं करपल्लवौ संपुटीकृत्य शीतमरुत्सुखमनुभवन्ती हिमा सोत्साहं पुरः प्राचलत्।

अथ द्वित्रदिवसोत्तरं मार्तण्डमण्डले निम्लोचति समासदद्युवतिरभीष्टस्थलमपर्याप्ताशनतया पाण्डुवदना कम्पमानाङ्गयष्टिः श्रमेण मृतप्राया च तुङ्गतुङ्गतुहिनसञ्चितशृङ्गं तुहिनगिरेः २८५

शनैः शनैरसृपत् । प्रकाशे दिनमणेर्हीरकमणिमालानामिव देदीप्यमानानां शिखरमालानामत्युज्ज्वलतेजसा दृष्टिस्तस्याः प्रत्यहन्यत । पर्यन्ते नानाविधविलक्षणभावनाभङ्गिप्रवाहपूरप्लावितान्तरा श्रीमदमरनाथस्य गुहान्तिकं संप्राप । आसीद्विशालस्थल्यां कन्दराद्बहिर्यात्रिकजनार्णवः—क्वचिच्छतशः परिणतवयस्काः कुब्जटिताङ्गयष्टयः, क्वचित्परस्सहस्रं ब्राह्मणसमूह इतस्ततो यात्रिकेभ्यो धनाशया साहाय्यं चिकीर्षुः, क्वचित्परश्शतमन्धपङ्गुमूकबधिरादिभिक्षुकव्रातो जीर्णचीवरवेष्टिताङ्गः कम्पमानः स्थितः, क्वचित्परश्शतं परदेशीयानां समुदायो निवर्तमानः श्रीनगरम्, क्वचिदर्धनग्नाः शिशवः स्वस्वमातृनितम्बलग्नाः । हिमा च यातायातसंक्षुब्धजनतामहार्णवाभ्यन्तरे संघर्षिता निपीडिताङ्गी च सर्वपार्श्वतः कथं कथमप्यचलत्, यावत्सा प्राप पवित्रगुहाम् । प्रविष्टा च तत्राद्राक्षीद् दूरवर्तिनि कोणे शिखरगोलार्धाकृतीन् तुषारराशीन् । मध्यभागे च गुहाया व्यराजत शशाङ्कमौलेस्तीर्थम् । अदृश्यत देवतायाः पुरो विशालहिममयशिलामधि भगवद्गतान्तरङ्गः साष्टाङ्गपातं नतो भक्तानां समूहः । केचिदन्येऽत्यन्ताभिनिविष्टाः सोत्कटं गायन्ति स्म दिव्यं स्तवम् । परमात्मैकपरायणं तं जनकदम्बं दर्शं दर्शं हिमा पुलकिताङ्गी व्यतिष्ठत विस्मयातिशयाकुला । न चिरादुपासनां विधाय यात्रिकाः सोत्कर्षभावप्रोत्साहिता उच्चोच्चैरगायन् साङ्गवेदपदक्रमोपनिषद्गतानि दिव्यपदानि । बधिरीकृतनिनादभयाक्रान्तं तत्क्षणे युगपत्प्रायोऽनेकरन्ध्रेभ्यो निर्गत्य कपोतवृन्दं समुड्डिड्ये बहिःकन्दरात् । द्विजावलोकनात्प्रहृष्टान्तरङ्गा यात्रिका द्विजवराश्च ससंभ्रमं बहिर्निर्गत्याक्रोशन्—प्रसन्नोऽस्ति भगवानमरनाथ इति । अखण्डपुण्यसम्पादनसमाश्वासी जनसंमर्दः शनैः शनैर्विकीर्णोऽभूत् । तेषु केचित्तपोधना अतिक्लेशमयवर्त्मनाऽवारुहन्, अन्ये च श्रीलाः सुगमेन पथा प्राचलन्, बहवश्च पृष्ठतश्चिरायिता अवस्थिताः । वेपमाना हिमा भगवतो मूर्तेरन्तिकमुपेत्य निपातितजानु चोपविश्य शिलायां बद्धाञ्जलिः सप्रश्रयं सौत्सुक्यं सोत्कण्ठाभिलाषमपि प्रार्थयत् । ज्वलद्धूपसौरभजातो म्लानगात्रीं तां पुनरुदजीवयत् । न चिरात् सा पटान्तेन सबाष्पनयने प्रोञ्छ्य यावत्समुत्तिष्ठते तावत्पृष्ठतः सा चकितचकितेव प्राचलत् । तस्थौ हि तत्पार्श्वे बद्धनिष्ठां तां सकौतुकं निरीक्षमाणः प्रवया योगीन्द्रो येन स्वकुटीरे कतिपयदिनेभ्यः पूर्वं प्रदत्ताश्रयासीत् सा । कथमसौ समायात इहेति नितरां विस्मितां बद्धवाचं तां प्रसन्नवलिनवदनप्रादर्शितसिद्धान्तप्रोत्साहो मुनीन्द्रस्तामभाषिष्ट—वत्से, अवलोकितासि मयात्राऽऽयान्ती सुदुष्करेणाध्वना विगणय्य सर्वमसह्यक्लेशजातम् । धन्या ते धर्मनिष्ठा । हन्त, धन्यस्ते भक्तेः प्रभावः । भगवदमरनाथस्तवाभीष्टं सफलीकुर्यात् । भूयात्तव पुण्यानुरूपा सन्ततिः । इति समर्पिताशीर्वचनेयं निरुद्धक्रन्दनाऽऽत्मानं कथमपि

संयम्याधोमुखी सा तस्थौ । भूयात्ते पुण्यसंचयस्त्वद्वंशजानां शिवंकरोऽपीति योगिनो मृदुलमुदीरितं वचः समाकर्ण्य युवतिः सविषादं विधूय शिरो हस्तौ निपीडयन्ती निरुत्तरा वितस्थे।

योगीन्द्रः—बाले, कोऽस्ति ते विपद्भारः। किमर्थं खिद्यसि। विशकलय्य कथय सर्वं वृत्तं सविस्तरम्।

इति सानुकम्पं प्रोत्साहितायास्तस्याः समुन्नमितशिरसो विहितबहुलसाधुवादस्य समासादितप्रसादस्य योगिनो दयोल्लसितमुखमण्डले बद्धदृष्टयास्तन्नयनयुग्मं किमपि विलक्षणसंमोहकतां भेजे। तत्करुणापूरद्विगुणोद्वेलितबाष्पा निःशब्दं रुदित्वा शनैः शनैः स्खलिताक्षरैः स्वीयमितिवृत्तं तस्मै न्यवेदयत्—चिरादन्तर्हितस्य भर्तुर्वार्ताम्, तद्वियोगवेदनाजन्यं दुःखम्, निजं पर्यटनाभिषङ्गं च । अथेदानीं वरं मरणमपीति निराशाकुला आयतं न्यश्वसीत्। दीर्घस्मृतिजातोद्वान्तरङ्गप्रतिध्वनिरिव वदनकुहरोद्गतं तदीयवचनं मुनीन्द्रस्य हृदयं गाढमस्पृशत्। स च क्षणं विमृश्य ततो विधूय शिरः प्राह मन्दं मन्दम् । वत्से, बहुतिथं कालमद्यापि जीविष्यसि। देवा हि तरुणजीवनध्वंसनमवलोकयितुं नोत्सहन्ते खलु। अनुसर मां तावत्। स्वयमेव हि द्रक्ष्यसि मत्प्रतिपादनस्य तथ्यताम्। इत्युक्त्वा गुहायाः समीपवर्तिष्वनेककुहरेष्वेकं प्रति प्राचलत्। सा च जोषं तमन्वसरत्। क्षणोत्तरं प्रविश्य तत्र शवपीठिकाकारां बृहत्तमामेकां हिममयशिलां समुपेतवन्तावुभौ। ततस्तुषारराशिमङ्गुल्या निर्दिश्य प्राह प्रवयाः—वत्से, पश्य पश्येममिति। अधश्च सा विलोक्य सद्यो विस्फारितलोचना स्थगितेव क्षणं जडीभूतेव तस्थौ। ततश्च व्यलपत्—अहह मम दयित! मम दयित!! इत्यवसन्नगात्री मुक्तकण्ठमरोदीद् विलोक्य हि हिमशिलयोरभ्यन्तरे निवेशितं कस्यचित्तरुणस्य पञ्चविंशतिवर्षीयस्य कलेवरम्। पञ्चभ्योऽब्देभ्यः पूर्वं गृहात् प्रस्थितोऽम्बुजो यथालोक्यत तया तथैव किञ्चित्स्मेराननः किञ्चित्सानुनयन्निवेदानीं प्रेतोऽपि ददृशे । झटिति सा ललाटतटाल्ललाटमण्डनायमानं सौभाग्याङ्कं कुङ्कुमं कमलोदरसोदरकरेण प्रोञ्छय ग्रीवायाश्च मङ्गलसूत्रमालामपनीय पारदर्शकहिमशिलां च सूक्ष्मं निरूप्य प्रेतस्य हैमाच्छादनपटोपरि तां न्यधात्। अहह हृदयेश्वर! हृदयेश्वर!! इति परिदेवन्ती शोकपारावारकल्लोलनिक्षिप्तेव सा भूमौ न्यपतत्। साक्षान्निराशाया मूर्तिरिव विह्वलतिवर्णानना हिमवत्पाण्डुवर्णा समभवत्सा, क्षणाच्च तद्बाहुपल्लवौ निर्जीवोपाङ्गमिव लम्बेतां निःसत्त्वौ। वत्से! वत्से!! प्राणिनां जीवनं जलबुद्बुदस्य भङ्गुरत्वमनुकरोति। अलं चिन्तया

मृतस्य। भगवतो ध्यानं कुरु निर्वाणं चान्विष्य। इति सहस्ताक्षेपं सर्वंप्रापञ्चिकचिन्तानिकरं विस्मृतिसिन्धौ निरस्यन्निव पलितशिरा योगिवरो युवतिं सान्त्वयामास। ततश्च समार्दवं सकरुणं क्रन्दन्तीमबलां बालां समुत्थापयामास। सा च कृतनिश्चयेव किञ्चिन्निर्णयावसरदेहल्यामात्मानमाकलयन्तीव मुहूर्तं जोषं वितस्थे। क्रमेण तदीयानने शान्तित्यागादिभावाः प्रादुरभवन्। ततश्च जानुभ्यामवनीं गत्वा बद्धाञ्जलिः सप्रश्रयं साभाणीत्—तात, अहमप्यत्रैव स्थित्वा गिरिजाशङ्कराभ्यां देहं समर्प्य जपध्यानतपोभिर्जीवनयात्रां यापयिष्यामि। इति वैराग्यशंसिना स्वरेण कर्णे जल्पित्वा बाष्परहिता जडीभूतेव नतमुखी तस्थौ। तपोनिधिस्तावदिङ्गितेनैवानुमतिं दत्वा तां कुहरस्य प्रवेशद्वारं प्रत्यनैषीत्। अथ यावच्छीतशीतलहैमसमाधिकुहराद्बुभौ निर्गच्छतस्तावदद्राष्टां तौ श्यामश्मश्रुलं चर्मकञ्चुकधारिणं धृतलोमशशिरस्कं दीर्घदुष्करपर्यटनश्रान्तं धूलीरूषिताननं च त्रिंशद्वर्षदेशीयं पान्थमेकं समायान्तं सुदीर्घप्रयाणोत्तरमिव। अथ मिथोऽवलोकितमात्रौ तरुणीतरुणौ क्षणं संभ्रान्तौ स्थितौ। पथिकः सहसा पृष्ठतश्चलितस्ततः क्षणमात्रं साशङ्कमान्दोल्यमानचित्तः समाह्वयद्युवतिं हिमे! हिमे!! इति। इत्थं तेन सम्बोधिता अध्वगस्यानने दृष्टिं स्थिरयन्ती स्थगितेव स्वचक्षुषी अविश्वसतीव च हिमा तस्थौ भूलग्नेव। स च स्वजीर्णपोट्टलिकां भुवि निक्षिप्य सरोमाञ्चं सविस्मयमवाप्तपरमप्रमोदसन्दोहो झटिति सोज्झम्पं हिमायाः पार्श्वमासाद्य तां सरभसमुद्धृत्य गाढमाश्लिष्यत्। अवगन्तुमक्षमा विलक्षणमिमं व्यतिकरं युवतिर्भ्रान्तभ्रान्ताभूत्। स च तामुदासीनामत्रस्थितां क्रियासमभिहारेण सम्बोधयन्प्राह—प्रेयसि, अपि नाभिज्ञातस्त्वयाहमम्बुजस्तव भर्तेति तेनानुयुक्ता सा शून्यदृष्ट्या क्षणं तं सूक्ष्मं निरैक्षत। ततश्च शिरसा संज्ञां दत्त्वा तस्मै, परावृत्य च समाधिकुहरं पुनः प्राविशत्। पान्थश्च योगीन्द्रद्वितीयः सकुतूहलं तामन्वगमत्। उपेतशवपीठिका सा क्षणं जोषं स्थित्वा प्रश्नपूर्वकमिङ्गितेनैव पथिकाय हिमशिलामधिशयानं तरुणस्य समाधिं निरदिशत्। स च प्रेतमालोक्य विस्फारितनेत्रः क्षणं तन्निरूप्य विस्वरमाक्रन्दत्—अहो, इमे मे तातपादाः। प्रेयसि, व्यतीतपञ्चभ्यो वर्षेभ्यः पितुरन्वेषणैकपरायणस्य परिभ्रमतो मे सर्वेऽपि प्रयत्ना मोघीभूताः। परं हन्त, त्वयाद्य तत्कार्यं सफलत्वं नीतमिति धन्यासि खलु। अहो, दैवघटनाया विचित्रता। इत्युदीर्य स निपातितजानुः शिलायामुपविश्य करौ संपुटीकृत्य साष्टाङ्गं पतितः। ततश्च मुहूर्तं विललास प्रकामं शान्तिः। हिमा योगीन्द्रश्च नतविग्रहं पथिकं सविस्मयमवेक्षेताम्। अथ समुत्थिते तस्मिन् मुनिरङ्गुल्या हिमशिलानिवेशितं प्रेतं निर्दिश्य व्याचख्यौ—अहो विधातुः सृष्टेरयमेकतमोऽद्भुतचमत्कारः। त्रिंशदब्देषु हि तरुणस्यास्य हिम-

शय्यायामस्यां कृतपदस्य निरन्तरप्रस्वापसुखमनुभवत इव कालहस्तेनास्पृष्टं कलेवरं स्थितम्। इत्युक्त्वा हिमशिलोपरि निहितां मङ्गलसूत्रस्रजमादाय पुनरब्रवीदम्बुजम्। बधानैतां मालिकां ग्रीवायां ते प्रेयस्याः। त्वदन्वेषणपरया साध्व्यानया पुरुषेणापि दुर्गम्यवर्त्मना पदसंचारिण्या श्रीमदमरनाथकन्दरारोहणं साधितमिति दिष्ट्याभिवर्धते सा। समागमोऽयं युवयोर्विजृम्भित एष तस्यास्तपसां परिणामः। इत्युदीर्य हिमाम्बुजौ प्रमोदपारावारप्रवाहपूरप्लावितौ विसृज्य कुहरान्निर्ययौ योगीन्द्रः।

---

# भुवश्चलाचलत्वविषये विचारः

श्रीबलदेवमिश्रः

तत्र लोकानामयं स्वभावो यत्प्रत्यक्षं विश्वसिति। प्रत्यक्षतः पृथ्वी स्थिरा भाति। सूर्याचन्द्रमसावेव प्रत्यक्षतः पूर्वतः पश्चिमायां दिशि भ्रमन्तौ दृश्येते। अत एव पृथिवी स्थिरा। अमुमेवार्थमस्या अचला, धीरा, धरित्री, धरणीत्यादिनामानि प्रकाशयन्ति।

वेदेऽपि पृथिव्याः स्थिरत्वं सूर्यस्य च गतिशीलत्वं प्रतिपाद्यते—

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥

इत्यनेन धात्रा पृथिवी सृष्टेत्यायाति। पुरुषसूक्तेऽपि—"नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत। पद्भ्यां भूमिः" एतेनेश्वरस्य पद्भ्यां भूमिर्जातेति प्रतिपादितम्। "स दाधार पृथिवीं द्यामुतेमाम्" इत्यादिश्रुत्या चामूर्त्तरूपेणेश्वरेण पृथ्वी धृतेति सिद्ध्यति, परमेश्वरस्य जगदाधारत्वात्। धृतेत्यनेन पृथिव्या अचलत्वं स्पष्टं भवति।

आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च।
हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्॥

अस्मिन् मन्त्रे सूर्यस्य भुवनपरिभ्रमणं प्रतिपादितम्। अस्मादपि भुवः स्थिरत्वमायाति। पृथिवीसूर्ययोर्द्वयोरपि गमनं केनापि मतेन न सिद्ध्यति।

## ज्यौतिषस्य मान्यता

ज्यौतिषे प्रत्यक्षतो विरुद्धमपि युक्तियुक्तमेव वस्तु मान्यं भवति। यथा ग्रहाः पूर्वतः
 पश्चिमायां दिशि भ्रमन्तो भान्ति, तेन तेषां प्रत्यक्षतः पश्चिमाभिमुखी गतिः। परन्तु वस्तुतस्तेषां गतिर्न पश्चिमाभिमुखी किन्तु पूर्वाभिमुखी एव। प्रवहवायोर्गतिः पश्चिमाभिमुखी। स्वगत्यपेक्षया

प्रवहवेगस्य बाहुल्यात् ते पश्चिमाभिमुखं भ्रमन्तो भान्ति। यथा कुलालचक्रस्थः कीटश्चक्रगतिविरुद्धगत्या भ्रमन्नपि चक्रगत्यैव गच्छन् प्रतीयते। अत एवोक्तं श्रीभास्कराचार्येण—

यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या।
कुलालचक्रभ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः॥

तेन यदि पृथिवी प्रत्यक्षतः स्थिरापि युक्त्या चलन्ती सिद्धयति तदा चलत्वमेव मान्यं भवति।

## आर्यभटः

पृथिवी चलतीत्यत्र पाश्चात्यानां विचारोऽग्रे स्फुटो भविष्यति। अत्र प्रथमं भारतीयानां विदुषां विचारः कीदृश इत्येव प्रकाश्यते। तत्र ऋषिभिन्नेषु पौरुषेषु ज्यौतिषसिद्धान्तकारेषु प्रथम आर्यभटः। अनेनैकविंशत्यधिकचतुःशततमे शकाब्दे स्वीयत्रयोविंशतिवर्षवयसि आर्यभटीयनामा ज्यौतिषग्रन्थो विलिखितः। अनेन कुसुमपुरे (वर्त्तमानपटनानगरे) स्वग्रन्थो विलिखित इति तस्य मङ्गलश्लोकेन स्फुटं ज्ञायते—

ब्रह्मकुशशिबुधभृगुरविकुजगुरुकोणभगणान्नमस्कृत्य।
आर्यभटस्त्विह निगदति कुसुमपुरेऽभ्यर्चितं ज्ञानम्॥

आर्यभटस्य पटनानिवासोऽनया युक्त्यापि सिद्धयति यत्तत्सामयिका वराहमिहिरब्रह्मगुप्तलल्लादयस्तत्प्रान्तीया विद्वांसोऽपि तस्य समालोचनां कुर्वन्ति। किन्तु भारतीयज्यौतिषशास्त्रस्येतिहासलेखकः श्रीशङ्करबालकृष्णदीक्षितः स्वीये ग्रन्थे आर्यभटं दाक्षिणात्यं शङ्कते, यतो डाक्टरकर्णेन आर्यभटीयं पुस्तकं दक्षिणदेशे मालाबारप्रान्ते प्राप्तम्, तथाऽऽर्यभटसिद्धान्तस्य मान्यता दक्षिणदेशीयवैष्णवेषु दृश्यते। तन्मते कुसुमपुरनामकं नगरं दक्षिणदेशे किमप्यासीद् यत्र तेनेदं पुस्तकं लिखितम्। वस्तुतो ज्यौतिषसिद्धान्तस्य प्रचारो दक्षिणदेशे भास्कराचार्यादेव दृश्यते। ततः पूर्वमुत्तरभारत एव ज्यौतिषस्य प्रचार आसीत्।

## भुवश्चलत्वम्

ज्यौतिषाचार्येषु सर्वप्रथममार्यभट एव भुवश्चलनं प्रतिपादयति—

अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत्।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम्॥

यथा नौस्थो नौकया गमनं कुर्वन् पुरुषोऽनुलोमगतिः स्वाभिमतां पश्चिमां दिशं गच्छन्नचलं नद्या उभयपार्श्वगतमचलं वृक्षपर्वतादिवस्तु विलोमगं प्राचीं दिशं गच्छदिव पश्यति। तथा भानि नक्षत्राणि लङ्कायां समपश्चिमगानि कर्तृभूतानि, अचलानि भूमिगतान्यचलवस्तूनि कर्मभूतानि, विलोमगानीव प्राचीं दिशं गच्छन्तीव पश्यति। लङ्कादिविषुवद्देशेष्वेव नक्षत्रपञ्जरस्य समपश्चिमगत्वम्। आर्यभटो महायुगेऽपि पृथिव्याश्चलनं साधयति।

## भुवश्चलत्वखण्डनम्

आर्यभटातिरिक्तास्तत्परवर्तिनः सर्वेऽपि प्राचीनाचार्यास्तत्प्रतिपादितं भुवश्चलत्वं खण्डयन्ति। तत्रार्यभटीयटीका (दीपिका) कारः परमेश्वरः—

"एवं ताराणां मिथ्याज्ञानवशादुत्पन्नां प्रत्यग्गमनप्रतीतिमङ्गीकृत्य भूमेः प्राग्गतिरभिधीयते। परमार्थतस्तु स्थिरैव भूरित्यर्थः।"

इत्यादिना तन्मतं खण्डयति। एवमन्यत्रापि स कथयति—

"भूमिर्ह्यचलेति प्रसिद्धा। तस्याः कथमत्र भ्रमणकथनम्। उच्यते, प्रवहाक्षेपात्पश्चिमाभिमुखं भ्रमतो नक्षत्रमण्डलस्य मिथ्याज्ञानवशाद्भूमेर्भ्रमणं प्रतीयते। तदङ्गीकृत्येह भूमेर्भ्रमणमुक्तम्। वस्तुतस्तु न भूमेर्भ्रमणमस्ति। अतो नक्षत्रमण्डलस्य भ्रमणप्रदर्शनपरमत्र भूभ्रमणकथनमिति वेद्यम्। वक्ष्यति च मिथ्याज्ञानम् 'अनुलोमगतिः' इत्यादिरिति।"

ब्राह्मस्फुटसिद्धान्तकारो ब्रह्मगुप्त आर्यभटमतमेवं तिरस्करोति—

प्राणेनैति कलां भूर्यदि तर्हि कुतो व्रजेत्कमध्वानम्।
आवर्त्तनमुर्व्याश्चेन्न पतन्ति समुच्छ्रयाः कस्मात्॥

अत्र टीकाकारः सुधाकरद्विवेदिमहाशयः कथयति—

"आर्यभटेन भूश्चला, भगणाः स्थिरा इति कल्पितम्। यथान्येऽहोरात्रासुभिर्भभ्रमादेकं भदिनं मन्यन्ते तथाऽऽर्यभटोऽहोरात्रासुभिः स्वाक्षोपरि भूभ्रमणं मन्यते। तेनायमर्थः—यदि भूः प्राणेनैकेनासुना एकां कलामेति गच्छति तर्हि नरः कुतः

कस्मात् स्थानात् कमध्वानं कं मार्गं गच्छेत्। अर्थान्मानवाः श्येनादयः पक्षिणश्च पृथिव्याः प्राग्भ्रमणेन स्वस्थानतोऽन्यत्र गताः पुनः स्वस्थानं न प्राप्नुयुः। तथोर्व्यां भूमेर्यद्यध ऊर्ध्वमावर्त्तनं भ्रमणं भवेत् तर्हि समुच्छ्रयाः प्रासादभूधरादयः कस्मान्न पतन्ति। अतो भूमेः प्राग्भ्रमणं नेत्याचार्याशयः।"

लल्लाचार्यः स्वीयग्रन्थारम्भे ग्रन्थान्ते च आर्यभटमाचार्यत्वेन प्रशस्य तदनुसारमेव स्वग्रन्थं रचयति—

नत्वा ब्रह्महरित्रिनेत्रदिनकृच्छीतांशुभूनन्दन-
प्रालेयांशुसुतेन्द्रमन्त्रिभृगुजच्छायासुतेभाननान्।
आचार्यार्यभटोदितं सुविषमं व्योमौकसां कर्म य-
च्छिष्याणामभिधीयते तदधुना लल्लेन धीवृद्धिदम्॥

ग्रन्थान्ते

लल्लेन तस्य तनयेन शशाङ्कमौलेः शैलाधिराजतनयादयितस्य शम्भोः।
सम्पूज्य पादयुगमार्यभटाभिधानसिद्धान्ततुल्यफलमेतदकारि तन्त्रम्॥

एवमार्यभटतन्त्रस्यानुयायी भवन्नपि पृथिवीभ्रमणरूपं तस्य मतं खण्डितवान्—

यदि च भ्रमति क्ष्मा स्वकुलायं कथमाप्नुयुः खगाः।
इषवोऽभिनभः समुज्झिता निपतन्तः स्युरपांपतेर्दिशि॥
पूर्वाभिमुखे भ्रमे भुवो वरुणाशाभिमुखो व्रजेद् घनः।

अत्र वराहमिहिरः—

भ्रमतिं भ्रमस्थितेव क्षितिरित्यपरे वदन्ति नोडुगणः।
यद्येवं श्येनाद्या न खात्पुनः स्वनिलयमुपेयुः॥
अन्यच्च भवेद् भूमेरह्ना भ्रमरंहसा ध्वजादीनाम्।
नित्यं पश्चात् प्रेरणमथाल्पगा स्यात् कथं भ्रमति॥

श्रीपतिश्चेत्थं तन्मतं खण्डितवान्—

अधः पतन्त्याः स्थितिरस्ति नोर्व्या
नभस्यनन्तेऽत्र वदन्ति जैनाः ।
द्वौ द्वौ रवीन्दू द्विगुणां भसंख्यां
चतुर्भुजस्तम्भनिभं च मेरुम् ॥
शरादिरूर्ध्वं निहितः कदाचिदायाति भूमिं न तदीयपक्षे ।
विहङ्गमा न स्वकुलायमापुरसत्प्रलापो हि तदुक्तिरस्मात् ॥
मन्दं महीपतनमाशुतरं शरादे-
र्नैतद्यतो गुरुतरस्य हि शीघ्रपातः ।
उर्वी धराधरपयोधियुतातिगुर्वी
बाणादिरूर्ध्वनिहितो नितरां लघीयान् ॥
नौस्थोऽनुलोमगमनादचलं हि यद्व-
च्चा मन्यते चलदिवैवमिलाभ्रमेण ।
लङ्कासमापरगतिप्रचलद् भचक्र-
मायाति सुस्थिरमपीति वदन्ति केचित् ॥
यद्येवमम्बरचरा विहगाः स्वनीड-
मासादयन्ति न खलु भ्रमणेन धात्र्याः ।
किञ्चाम्बुदा अपि न भूरिपयोमुचः स्यु-
र्देशस्य पूर्वगमनेन चिराय हन्त ॥
भूगोलवेगजनितेन समीरणेन
केत्वादयोऽप्यपरदिग्गतयः सदा स्युः ।
प्रासादभूधरशिरांसि च सम्पतेयु-
स्तस्माद् भ्रमत्युडुगणस्त्वचलाऽचलैव ॥
उपरि गच्छति चेद्वसुधा तदा निकट एव भवेदुडुपञ्जरः ;
चरति तुम्बकवद्यदि वा जले किमिति तद्विलयो न भवेन्मृदः ॥
पात्रक्लृप्तिरपि या क्रियतेऽन्यैः सैव तद्वदिव हन्त निरस्ता ।
पार्श्वयानमपि दृष्टिविरोधान्नोपपद्यत इलावलयस्य ॥ इति ।

भास्कराचार्योऽपि—

भपञ्जरस्य भ्रमणावलोकादाधारशून्या कुरिति प्रतीतिः।
खस्थं न दृष्टं च गुरु क्षमातः खेऽधः प्रयातीति वदन्ति बौद्धाः॥
भूः खेऽधः खलु यातीति बुद्धिर्बौद्ध मुधा कथम्।
जाता यातं तु दृष्ट्वापि खे यत् क्षिप्तं गुरु क्षितिम्॥

यदि भूरधो याति तदा शरादिकमूर्ध्वे क्षिप्तं पुनर्भुवं नैष्यति, उभयोरधो गमनात्। अथ भूमेर्मन्दा गतिः शरादेः शीघ्रा तदपि न। यतो गुरुतरं शीघ्रं पतति। उर्व्यतिगुर्वी। शरादिरतिलघुः। रे बौद्ध, एवं दृष्ट्वापि भूरधो यातीति बुद्धिः कथमियं तव वृथोत्पन्ना।

अत्र कमलाकरभट्टः—

स्थिरं प्रत्यक् चलं भाति खस्थं प्राग्भूभ्रमान्नृणाम्।
प्रवहो व्यर्थ इत्यार्यभटोक्तेः शृणिवहोत्तरम्॥
यत्सर्वतो निराधारं स्वोर्ध्वदेशगतं गुरु।
स्वस्थान एव तन्नूनं पततीत्यपि निर्णये॥
असद्भूभ्रमणं चैन्द्यामनार्षे स्वीकृतं तु यत्।
भूमावपि ध्रुवायोगात्तत्तुच्छं प्रवहे गते॥

एवं सर्वे प्राचीनगणकाः स्वयुक्त्या भुवो भ्रमणं खण्डयन्ति।

## आधुनिकगणकमतम्।

आधुनिकेषु गणकेषु केवलं महामहोपाध्याया बापूदेवशास्त्रिवर्या न केवलं पृथिवीचलनं समर्थयन्ति किन्तु भारतीयाः सर्वे विद्वांसोऽमुमेव मतं समर्थयन्तीत्यत्र युक्तिमपि ददति। तैरेकम् 'प्राचीनज्यौतिषाचार्याशयवर्णनम्' इति नामकं बहुमूल्यकं लघुपुस्तकं निर्मितम्। तत्रैवं ते लिखन्ति—

"इह खलु ग्रहभ्रमणविषये द्वे मते तावत् सुप्रसिद्धे—एकं भूः स्थिरा तामभितश्च सूर्यादयो ग्रहा भ्रमन्तीति। अन्यच्च रविरचलस्तं परितः सभूमयः सर्वे ग्रहाः पर्ययं कुर्वन्तीति।

न च सूर्यमभितो ग्रहभ्रमणमभिप्रयतामाद्याचार्याणां भूमिं परितो भ्रमणप्रदर्शनमसङ्गतमिति वाच्यम्; लोकप्रतीत्यनुसृतये लाघवेन गोलस्थित्यवगतये च सूर्यधर्माणां धरण्यामारोपणस्य तैरङ्गीकारात्।

तदेवमारोपरसिका आचार्या बोधलाघवं लोकप्रतीतिं चानुसरन्त एव कल्पनालाघवेन सिद्धेऽपि तरणिसहितस्य भपञ्जरस्य धरण्याश्चाचलत्वचलत्वे अन्योन्यस्मिन्नारोप्यैव तरणिं भचक्रं च चलं धरणिं चाचलां वर्णयाञ्चक्रुरित्यपि प्रतीयते। भवति हि लाघवमयं रविः प्रातस्तत्रस्थ इदानीमत्रास्तीति बोधयितुम्। जानन्ति चैवमेव लोकाः। एवं रवे राश्यन्तसंचारमपि। कल्पनायां तु भवत्येव तरणेर्धरणिं परितो भ्रमणस्याङ्गीकरणे तरणिं परिभ्रमतां व्योमचारिणामपि भुवमभि भ्रमणमनायत्या स्वीकृतमिति गौरवम्। मतान्तरे च धरणेरेकस्या एवेति लाघवम्।

तदेवं भूमेर्भूलोकस्य भचक्रभ्रमस्य सजातीयं स्वाक्षं परितो भ्रमणं रविभ्रमणस्य सजातीयं क्रान्तिवृत्ते भ्रमणं च मूलकाराणामभिप्रेतमिति सिद्धम्।"

पुस्तकस्यास्य प्रकाशनानन्तरं तदानीन्तनैर्महामहोपाध्यायैः सुधाकरद्विवेदिभिः 'धराभ्रमे प्राचीननवीनयोर्विवादः' इति नामकमेकं ग्रन्थं निर्मितम्। यत्र पृथिव्याः स्थिरत्वं युक्त्या साधितम्, भुवो भ्रमणं च खण्डितम्—

वयं वेदान् विद्वन् विबुधवरवाचा विलसितान्
विचार्यैवं बुद्धया बुधवर वदामोऽवनिविधौ।
वरा वारा वेला बत विदितदिग्वारणवरै-
र्वराहाद्यैः सर्वैर्वियति विधृतेयं वसुमती॥

वेदादिवाक्यानि सर्वैर्मतानि प्रत्यक्षतो वै सतां प्रस्फुटानि।
नास्तीह तस्मात्प्रमाणस्य चर्चा प्रत्यक्षबाधो महांदूषणं हि॥
कथयामो यदि तर्हि ते विचारो धरणीगोलचलभ्रमस्य सन्नो।
नहि वेदादिकगीतकीर्तिरीशो रचना तस्य नरैर्विचारयोग्या॥
सुधाकरो रामपरो द्विवेदी धरासुरो भूभ्रमकर्मवेदिः।

वेदार्थसिद्ध्यै वदतीति वेदिः प्राचीनवेदी चलगर्वभेदी॥

एवं वेदार्थसिद्ध्यै पृथ्वी स्थिरेति स्वमतं ते निरूपयन्ति।

## आर्यभटसमालोचना

भूचलनविषये प्रथममार्यभटोऽन्तरङ्गदृष्ट्या विचारार्हः, यतोऽयमेव पौरुषसिद्धान्तकारेषु प्रथमः। अयमेव भूचलनरूपमपूर्वं मतं प्रतिपादितवान्। आर्यभटात् पूर्वं न कोऽपि भारतवर्षे तादृशं विचारं प्रकाशितवान्। आर्यभटात्पश्चादपि कोऽपि भारतीयगणकस्तन्मतं न समर्थितवान् किन्तु सर्वेऽपि तन्मतखण्डनं स्वीयबुद्ध्या चक्रुः, खण्डनं साधु भवत्वसाधु वा। अत्रेदं विचारणीयं विद्यते यदार्यभटे तादृशं मतं कथं समायातम्! किमिदमार्यभटस्य स्वीयमतमथवाऽन्यस्य मतम्। इदानीमिदं मतं जगति वैज्ञानिकैः स्वीकृतं दृश्यते। तदा भारतीयगणकेन केनापि मतस्यास्य समर्थनं कथं न कृतम्। आर्यभटविषये भारतीयगणकानां कीदृशः समादरः। आर्यभटस्य वस्तुतः कीदृशं स्थानमित्यादिसमालोचना युज्यते। अत्र प्रथमं वयमन्येषां विचारानुपस्थापयामः। पश्चात् स्वकीया विचाराः प्रदर्शयिष्यन्ते।

## भारतीयविदुषां विचित्रा रीतिः

भारतीयगणकानां रीतिरपि विचित्रा। ब्रह्मगुप्त आर्यभटमतं बहुशः खण्डयति। आर्यभटः किमपि न जानातीत्यपि वदति स्वीये ब्राह्मस्फुटसिद्धान्ते—

स्वयमेव नाम यत्कृतमार्यभटेन स्फुटं स्वगणितस्य।  
सिद्धं तदस्फुटत्वं ग्रहणादीनां विसंवादात्॥  
जानात्येकमपि यतो नार्यभटो गणितकालगोलानाम्।  
न मया प्रोक्तानि ततः पृथक् पृथग् दूषणान्येषाम्॥  
आर्यभटदूषणानां संख्या वक्तुं न शक्यते यस्मात्।  
तस्मादयमुद्देशो बुद्धिमताऽन्यानि योज्यानि॥ इत्यादिना।

स एव ब्रह्मगुप्तः स्वीये खण्डखाद्यकनामके करणग्रन्थे आर्यभटमतमादरेण स्वीकरोति—

प्रणिपत्य महादेवं जगदुत्पत्तिस्थितिप्रलयहेतुम्।  
वक्ष्यामि खण्डखाद्यकमाचार्यार्यभटतुल्यफलम्॥  
प्रायेणार्यभटेन व्यवहारः प्रतिदिनं यतोऽशक्यः।  
उद्वाहजातकादिषु तत्समफललघुतरोक्तिरतः॥ इति।

अत्रैक एव पुरुष आर्यभटमेकत्र निन्दति स्थानान्तरे प्रशंसति च। एवमेवास्माकं गुरुवराः सुधाकरद्विवेदिनो महाभागाः स्वीयब्राह्मस्फुटसिद्धान्तटीकायां ब्रह्मगुप्तमतनिराकरणपूर्वकमार्यभटमतसमर्थनं कुर्वन्ति—"भूवायुसहिताया भूमेः प्राग्भ्रमणं भवतीत्यज्ञात्वाऽऽचार्येणेदं खण्डितमतोऽसद्दूषणमेतत्" इति। एवमेव ते आर्यभटीयटीकाकारस्य परमेश्वरस्यापि मतं तिरस्कृत्यार्यभटमतस्थापनां कुर्वन्ति—"अत्रार्यभटाभिप्रायमबुद्ध्वैव परमेश्वरेण स्वटीकायामन्यथा व्याख्यातं तत्सुधीभिर्नादरणीयमिति। यदि परमेश्वरव्याख्या समीचीना स्यात् तर्हि ब्रह्मगुप्तखण्डनस्यावसरो नैव भवेत्। 'प्राणेनैति कलां भम्' इति तत्प्रकल्पितः पाठोऽपि नार्यभटसंमत इति सुधीभिर्भृशं विचिन्त्यम्" इत्यादिना। त एव स्वयं पाश्चात्यमतनिष्णाता अपि स्वीये 'धराभ्रमे' पुस्तके पृथिव्या अचलत्वमेव स्थापयन्ति। तेन संस्कृतविदुषामियं परिपाटी यत्ते सत्यान्वेषणाय तथा न यतन्ते यथा परमतखण्डनाय। तन्मतं साधु भवत्वसाधु वा। नैव केवलं ज्यौतिषे किन्तु दर्शनशास्त्रेऽपि बौद्धैर्जैनैश्चार्वाकैर्यत्किञ्चिदुक्तं तत्खण्डनमेव तेषामास्तिकदार्शनिकानां कर्तव्यं भवति। एवमेकशास्त्रमन्यशास्त्रमतं दूषयति। एषा सनातनी रीतिः।

## आर्यभटप्रशंसा

आर्यभटविषये भटप्रकाशिकाख्यटीकाकारः श्रीसूर्यदेवयज्वा एवं लिखति—

"तत्र वाराहकल्पस्यास्य वर्तमानाष्टाविंशचतुर्युगस्य कल्पादेः खखषड्‌वर्गमिते सौराब्दे गते त्रयोविंशे वर्षे आचार्यार्यभटः पुरातनानि कालक्रियागोललौकिकगणितप्रतिपादकानि शास्त्राणि कालदैर्घ्यायत्तसंप्रदायविच्छेदग्रन्थवैकल्यादिजनितेन दृग्गणितविसंवादेनाकिञ्चित्कराण्यालोच्य समदृग्गणितज्योतिःशास्त्रं चिकीर्षुस्तादृशज्योतिर्ज्ञानबीजलाभाय ज्योतिश्चक्रग्रहादेरादिवक्तारं भगवन्तं स्वयंभुवममलैस्तपोभिराराधयामास। ततः प्रसन्नो भगवांस्तस्मै तादृशमतीन्द्रियमतिरहस्यं कालक्रियागोलज्ञानबीजभवं ददेश। ततोऽयमार्यभटस्तदुपदिष्टं सर्वबीजभूतं दशभिर्गीतिसूत्रैस्तत्परिकरभूतलौकिकगणितबीजं स्वबुद्ध्याभ्यूहितमेकेनार्यासूत्रेण संक्षिप्य लोके प्रकाशयामास। ततोऽष्टाधिकशतैरार्यासूत्रैर्गणितकालक्रियागोलबीजोपयोगं दिङ्मात्रेण दर्शयामास।
२९८ तदिदमाचार्यार्यभटमुखारविन्दान्निर्गतं प्रबन्धद्वयात्मकं ज्योतिःशास्त्रमस्माभिर्व्याचिख्यासितम्।"

आर्यभटसम्बन्धे कस्यचन श्लोकोऽयम्—

सिद्धान्तपञ्चकविधावपि दृग्विरुद्ध-
मौढ्योपरागमुखखेचरचारक्लृप्तौ ।
सूर्यः स्वयं कुसुमपुर्यभवत् कलौ तु
भूगोलवित् कुलप आर्यभटाभिधानः ॥

श्रीपतिपद्धतेः सिद्धान्तशेखरस्य टीकाकारः श्रीकृष्णमिश्रापरनामधेयो बबुआजीमिश्र आर्यभटविषये एवं कथयति—

"आर्यभटाचार्यतः प्राचीनो ज्यौतिषेतिहासो बहुधानुमानमाश्रित्यैव लिखितः कथितो भवति। परमधुना भारतीयज्योतिःशास्त्रप्रतिष्ठाता श्रीमानार्यभटाचार्यः स्वजनुषा भारतवर्षममुं सत्यमेव गौरवान्वितमकरोत्। अयमेवार्यभटो ग्रीसदेशवासिनां मध्ये 'अन्दुवेरियस'—नाम्ना, अरबदेशवासिनां मध्ये च 'अर्जभर'—नाम्ना, भारतीयानां मध्ये च भूभ्रमणप्रतिपादकतया प्रथित आसीत्। पाश्चात्यदेशीयगणितज्ञानामाश्चर्यजनकोऽस्माकं कुट्टकविधिः प्रथमत आर्यभटेनैवाविष्कृत इति। एतत्प्रणीतमार्यभटीयतन्त्रमिति जगद्विख्यातो ज्यौतिषग्रन्थ एकविंशत्यधिकचतुःशततमे शालिवाहनशके रचितोऽभूदिति तद्ग्रन्थोक्त्यैव स्फुटीभवति। यथा तत्र कालक्रियापादे—

षष्ट्यब्दानां षष्टिर्यदा व्यतीतास्त्रयश्च युगपादाः।
त्र्यधिका विंशतिरब्दास्तदेह मम जन्मनोऽतीताः॥

एवं कल्यादेरेव स्वसमयो लिखितः, यतोहि तत्समये शकादीनां प्रचारस्तथाभूतो नासीत्।"

## पाश्चात्यानां भारतीयज्यौतिषविषये धारणा

पाश्चात्यानामियं धारणा यद्भारतीयं ज्यौतिषं ग्रीसदेशीयज्यौतिषस्यानुकरणमेव। तद्देशीयानामितिहासलेखकानां कथनमेवम्—

The evidence all indicates that from about 400 A. D. the Greek system of Astronomy was adopted by the Hindus their astronomers having therefore absorbed Greek views although

they were not accepted in European countries until much later. It may be that the time of introduction of Greek ideas was much earlier. perhaps between the period of Hipparchus ( 150 B. c ) and ptolemy ( about 140 A. D. )

We owe very little to Hindu Astronomy as far as direct influence is concerned. It has been pointed out that indirectly we are indebted to the Hindus because they imparted certain astronomical information to the Arabs, who, in turn, passed it to Europe, and that the Hindus received their astronomical knowledge from the Greeks.

अस्यायमभिप्रायो यत्प्रमाणेभ्य इदं सिद्धयति यत् खीष्टशकाच्चतुःशतवर्षादूर्ध्वं हिन्दुभिर्यावनं ज्यौतिषं स्वीकृतम्। भारतीया ज्योतिर्विदो यवनमतं स्वीकृतवन्त इति बहुकालपर्यन्तं पाश्चात्त्या न विश्वसन्ति स्म। प्राय इतो द्विसहस्रवर्ष-सप्तदशशतवर्षेभ्यः पूर्वं 'हिपार्कस-टॉलेमी' नामकगणकयोः समये हिन्दुगणकैर्यावनं ज्यौतिषं गृहीतम्।

साक्षात् सम्बन्धेन वयं हिन्दुगणकानामल्परूपेणैव कृतज्ञाः। वस्तुतो वयमप्रत्यक्षरूपेण हिन्दूनां कृतज्ञाः। यतस्तैर्ज्यौतिषज्ञानमरबदेशीयल्लोकेभ्यः प्रदत्तम्। तेभ्यो यूरोपदेशीयाः प्राप्तवन्तः। परमिदं ज्यौतिषसिद्धान्तज्ञानं हिन्दुभिर्यवनेभ्य एव गृहीतमिति।

इयमेव धारणा पाश्चात्त्यानां भारतीयज्यौतिषशास्त्रविषये। तेषामियं धारणा न निराधारा। अत्र मुख्यं प्रमाणं वराहमिहिरः, यो हि यवनानामृणं स्पष्टशब्देन घोषयति—

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्ब्रह्मविद्द्विजाः॥ इति।

एवमेव प्रचलितसूर्यसिद्धान्ते मयनामकायाऽसुराय सूर्यांशपुरुषो ज्यौतिषसिद्धान्तज्ञानमदात्। एष मयासुरो यवनो बहूनां मते। पञ्चसिद्धान्तिकायामेकः सिद्धान्तो रोमकसिद्धान्तः। एभिः प्रमाणैस्ते कथयन्ति यद्भारतीया ग्रीसदेशीयविद्वद्भ्यो विचारान् संगृहीतवन्तः।

आर्यभटविषये महामहोपाध्यायाः सुधाकरद्विवेदिनो गणकतरङ्गिण्यां लिखन्ति—

"यवनैश्च (The Greek) अक्षरैः स्वरयुक्तैस्तथैव प्रायः संख्याः प्रकाश्यन्ते यथार्यभटेन प्रकाशिताः। एकस्याः कल्पनाया अन्या कल्पना निःसरतीत्यर्थः। अत आर्यभटेन कस्माच्चिद्यवनपण्डिताद्भगणादयः प्राप्तास्ते च स्वाभ्यस्तसङ्केतेनैव संस्कृताक्षरैर्गोपनार्थं प्रकाशिता इत्यवबुद्ध्यते।

आर्यभटेन स्वकल्पिता वा यवनैः प्राप्ता विशेषा ये स्वतन्त्राः प्रकाशितास्ते भारतवर्षे प्रायोऽपूर्वा विचारार्हाश्च। अहो अतिपरिश्रमेण परदेशीयपण्डितस्य देवतारूपस्य कृपालवेन लब्धा ग्रहगणितोपयोगिनो भगणादयः सर्वजनप्रसिद्धा मा भूयासुर्मद्भक्तशिष्या एव तान् जानन्त्विति धिया सुधियाऽऽर्यभटेन कृतं नवीनसङ्केतकल्पनमिति मन्मतिकल्पनं किमु न युक्तम्?

एवमत्र गणितपादे सम्प्रति प्रचलितपाटीगणितस्यानेकानि कठिनानि सुगमानि च श्रेढीफलभिन्नसमच्छेदाद्यानयनानि गणितविदामस्यार्यभटस्य सम्यक्पाण्डित्यविवेचने भ्रमोत्पादकानि सन्ति। प्रकाराणां दर्शनेनाऽऽर्यभटः स्वयं तेषां कर्ता नेति मम निःसंशयं भाति।"

## आर्यभटविषये स्वीयं मतम्

आर्यभटप्रशंसकैरार्यभटविषये यानि विशेषणानि दत्तानि तानि युक्तान्येव। आर्यभटः प्रतिभाशाली विद्वान्। पृथिवीभ्रमणविषये पृथिवीभ्रमणकथनमार्यभटस्य स्वीयं मतम्। अस्याधारो बौद्धानां मतं यस्मिन् मते पृथिव्यधो याति। आर्यभटेन दृष्टं यत्र भपञ्जरस्य भ्रमणं तत्र पृथिवीभ्रमणं तथैव गत्या स्वीकरणीयं यथा नाक्षत्रभ्रमाणां रविभगणानां च योगे युगे सावनाहा भवन्ति। एवं युगसावनाहानां रविभगणानामन्तरेण युगे नक्षत्रभ्रमणस्थले पृथिवीभ्रमणं स्वीकृतं तेन। परं तत्र विचारे प्रागल्भ्यं न दत्तम्। केवलं स्वीयमतं प्रकाशितम्। गृहाणां भूकेन्द्रिकभ्रमणं भपञ्जरस्य च चलनं ब्रह्मसिद्धान्तानुसारेणैव कथितम्। पाश्चात्यानां भूभ्रमणविषयकमतमार्यभटेन न स्वीकृतम्। तत्रेदं कारणं यत्पृथिवी स्वाक्षोपरि भ्रमतीत्येवं स्पष्टरूपेण कथनं तत्समर्थनं च यूरोपदेशे प्रथमतः 'कोपर्निकस'-महाशयेन पञ्चदशशताब्द्यां कृतम्। अस्मान्महोदयात् सहस्रवर्षपूर्वमार्यभटस्य समयस्तेनात्र विषये आर्यभटः स्वतन्त्रः, न

कस्याप्यनुगामी। एवमपि ग्रीसदेशवासिभिः कथ्यते यत्पृथिवी चलतीत्यस्य ज्ञानं 'पीथागोरस'-महाशये प्रथमतोऽभूत्। परन्तु तेन कुत्राप्यस्योल्लेखो न कृतः। तत्पश्चात् 'फिलोलौस-अरिस्टार्चस'-महाशयाभ्यामप्येतद्विषये यत्किञ्चित्कथितम्। तेषां केवलमेतत्कथनमेवाऽऽर्यभटस्य आधार इत्यत्र प्रमाणं नास्ति। एवं चेद् वराहमिहिरस्यैव यवनैः सह विशेषतः सम्बन्ध आसीत्तदा वराहमिहिरेणैव एतादृशं मतं कथं न प्रकाशितम्। किन्तु वराहमिहिरः स्वयमेतन्मतं खण्डयति तेन यवनानामेवेदं मतमार्यभटेन गृहीतमिति निस्सार एष विषयः।

आर्यभटो न केवलं भूचलनकथनदृष्ट्या किन्तु पूर्वापरेतिहासदृष्ट्यापि विचारणार्हः। तस्य मते प्रकारविशेषे चेतिहासतत्त्वं सुगूढं निहितमस्ति। भुवश्चलनं प्रतिपाद्य युगे भुवो भ्रमणमानं च दत्त्वा रवेरपि युगभगणं लिखति। तथा भचक्रस्य च भ्रमणं कथयति-'युगरविभगणाः ख्युघृ' इति। एवम्—

उदयास्तमयनिमित्तं नित्यं प्रवहेण वायुना क्षिप्तः।
लङ्कासमपश्चिमगो भपञ्जरः सग्रहो भ्रमति॥
भानामधश्शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः।
तेषामधश्च भूमिर्मेधीभूता खमध्यस्था॥

यथा बलीवर्दमहिषादयो वंशमयं शङ्कुं मध्ये कृत्वा तं परितः कणमर्दने भ्रमन्ति तथा भानि ग्रहाश्च खमध्ये स्थितां भूमिं मध्ये कृत्वा तां परितो भ्रमन्ति। एतेन पृथिवीकेन्द्रकमेव ग्रहभ्रमणमार्यभटेन कथितं यत्रैको ग्रहः सूर्योऽप्यस्ति।

भूभ्रमणं प्रतिपाद्यापि पृथिवीकेन्द्रकमेव ग्रहभ्रमणमार्यभटेन कथमुक्तमित्यत्र महामहोपाध्यायो द्विवेदिमहाशयो गणकतरङ्गिण्यां लिखति—

"कालक्रियापादस्य षोडशश्लोकेन सर्वे ग्रहा भूमिं परितो भ्रमन्तीति प्रतिपादितमाचार्येण। तच्चे यथा लोकैरवलोक्यते तथा लौकिकबुद्ध्या लिखितमित्यनुमीयते।"



युगे ग्रहाणां कति पर्यया भवन्तीति गणना यूरोपदेशेऽद्यापि नास्ति। युगे यावन्मितानि सौरवर्षाणि भवन्ति तत्तुल्याङ्कानां गणना स्थानं च यूरोपदेशे पञ्चदशशताब्दीपर्यन्तं नासीत्,

तदा यवनेभ्यो भगणसंख्या आर्यभटेन कथं गृहीताः। तथार्यभटस्य गणिते ज्यौतिषसिद्धान्ते च ये विशेषाश्चमत्कारास्तेषां ज्ञानमार्यभटसमयात् सहस्रवर्षेभ्यः पश्चादपि यूरोपीयानां नाभवत्। तेन ते प्रकारा आर्यभटस्य स्वीया एव। ज्यौतिषशास्त्रं सर्वेभ्यो न देयं केवलं भक्ताय शिष्यायैव देयमिति प्राचीनऋषीणामाज्ञा विद्यते।

दिव्यं ज्ञानमतीन्द्रियं यदृषिभिर्ब्राह्मं वसिष्ठादिभिः
पारम्पर्यवशाद्रहस्यमवनीं नीतं प्रकाश्यं ततः।
नैतद् द्वेषिकृतघ्नदुर्जनदुराचाराचिरावासिनां
स्यादायुःसुकृतक्षयो मुनिकृतां सीमामिमामुज्झतः॥

तेनैव कारणेन तादृशसंकेतेनाऽऽर्यभटेन भगणमानं लिखितम्। स संकेत आर्यभटस्य स्वीय एव।

आर्यभटेनैतादृशं विशिष्टं ज्ञानं कथं प्राप्तं तत्र स्वयमेव कथयति–

सदसज्ज्ञानसमुद्रात् समुद्धृतं देवताप्रसादेन।
सज्ज्ञानोत्तमरत्नं मया निमग्नं स्वमतिनावा॥
आर्यभटीयं नाम्ना पूर्वं स्वायम्भुवं सदा सद्यत्।
सुकृतायुषोः प्रणाशं कुरुते प्रतिकञ्चुकं योऽस्य॥

एभ्यः स्फुटमेव ज्ञायते यदार्यभटेन स्वायंभुवं ब्रह्मणोक्तं ज्यौतिषतन्त्रमाधारीकृत्य सदिति दृग्गणितैक्यकृत्, असदिति दृग्गणितैक्यविसंवादि ज्यौतिषज्ञानं देवतानुगृहलब्धबुद्धया वा वेधादिस्वकौशलेन वा विविच्य सदेव ज्यौतिषज्ञानं लोकायोपदिष्टमिति। अत्र 'स्वमतिनावा' इति वाक्यं विशेषार्थं प्रकटयति। यथा नौस्थ आर्यभटो गच्छन्तीं नावं स्थिरां तथा वस्तुतः स्थिरं प्रासादवृक्षादिकं चलन्तमवगत्य चलद्भचक्रं स्थिरं स्थिरां भुवं च चलन्तीं स्वीचकार। अत्र ज्ञाने यथा नौरेवाधारीभूता जाता, एवं स्वमतिनावा असज्ज्ञानात् सज्ज्ञानमुपलभ्य सर्वमत्र गून्थे निबद्धम्। यथा समुद्रे उत्तमरत्नं सद्वस्तु शैवालादिकमसद्वस्तु च तिष्ठतस्तत्र कश्चिन्नाविको विशिष्टबुद्धया रत्नमेव गृह्णाति नासद्वस्तु, एवमेवार्यभटेन देवताप्रसादात् स्वमतिनावा जगति प्रसरदसज्ज्ञानमपहाय वास्तवज्ञानरूपं रत्नं समासादितम्। इदं सज्ज्ञानं ब्रह्मणा प्रोक्तं यच्च कालान्तरेणासज्ज्ञानमिश्रितं जातं तत्रासज्ज्ञानमपास्य वास्तवब्रह्मसिद्धान्तरूपं ज्ञान-

मत्रार्यभटीये तन्त्रे आर्यभटेन निबद्धम् । अत्र प्रतिकञ्चककारिणो विरुद्धाचरणं कृतवतः सुकृतायुषोः प्रणाशो भविष्यति । पूर्वमेतादृशी दुःस्थितिरासीद् यदन्यस्य कृतिं स्वीयां कृत्वा लोको यशोऽर्जनं करोति स्म । तदर्थमार्यभटस्तादृशाय लोकाय शापं ददाति । आर्यभटसमयस्य का कथा, अशीत्यधिकपञ्चदशशततमे शके स्वीयसिद्धान्ततत्त्वविवेक एतादृशमेव भयमूरीकृत्य कमलाकरभट्टेन लिखितम्—

यः करोति स्वनाम्नाऽज्ञः परस्योत्कृष्टकल्पनाम् ।
स शीघ्रं क्षयमाप्नोति जनिश्चान्त्यजयोनिषु ॥

आर्यभटस्य देवताप्रसादो न यवनप्रसादः, किन्तु ब्रह्मणः प्रसादः । ब्रह्मणः प्रसादफलमपि विशिष्टबुद्धेरासादनमेव यया विशिष्टबुद्ध्या विशिष्टार्थमार्यभटः प्रतिपादयति स्म । आर्यभटप्रतिभायां संशयस्य कारणं न विद्यते । आर्यभटेन विशिष्टज्ञानं विदेशीयविद्वद्भ्यः संगृहीतं स्यात्तदा ब्रह्मगुप्तकृतखण्डनस्यावसरो नैव स्यात् । तथा ब्रह्मगुप्तोक्तौ अस्याभासोऽवश्यमेव स्यात् । परञ्च यतो ब्रह्मगुप्तः केवलमार्यभटमेवाक्षिपति न तज्ज्ञानदातारमन्यं तेन स्वकल्पनायां स्वविज्ञानप्रतिपादने आर्यभटः स्वतन्त्र एव ।

अत्रेदमवश्यं विचारणीयं यज्ज्यौतिषसिद्धान्तस्कन्धे इदानीं यथा ब्रह्मगुप्तवराहमिहिरभास्कराचार्यादयो विबुधाः सर्वेषां विदिता न तथार्यभटः । तत्रेदं कारणं यद्भारते सौरमतं ब्राह्ममतं च विशेषतः प्रसिद्धम् । सौरमते सूर्यसिद्धान्तः सिद्धान्ततत्त्वविवेकश्च प्रख्यातौ । ब्राह्ममते ब्राह्मस्फुटसिद्धान्तः सिद्धान्तशिरोमणिश्च । अत एवार्यभटस्य न तादृशः प्रभावः । द्वितीयमिदं कारणम्—पृथिवीभ्रमणप्रतिपादनेनाऽऽर्यभटस्य विशिष्टं यशः, परन्तु तद्यशो भारते न मान्यं किन्तु हेयमेव । तेनाप्यार्यभटोऽद्यावधि न तथा प्रख्यातः । तृतीयं कारणमिदं यदार्यभटसिद्धान्तस्योपरि साध्वी टीका न वर्तते यथार्यभटमतं सम्यक्प्रकाशितं भवेत् । अद्यापि तद्ग्रन्थीयपाठो न साधुः । तत्र यथार्थाशयप्रकाशिन्याष्टीकायाः प्रयोजनं विद्यत एव । अत एवार्यभटीयग्रन्थः पठनपाठनयोर्न प्रसिद्धः ।

एतादृशः समयः शीघ्रमेवागमिष्यति यदाऽऽर्यभटो ज्यौतिषसिद्धान्तकारेषु सम्राड्रूपेण स्थापितो भविष्यति । विशेषतो बिहारप्रदेशस्थपटनानागरिकाणामिदं कर्तव्यं यत्ते आर्यभटाय यथार्थासनं ददत्विति ।

# निगमनम्

यदि भुवश्चलनं वास्तवं तदा कथं सर्वैर्भारतीयैः प्राचीनैर्नवीनैर्वा गणकैस्तन्मतमद्यावध्युपेक्षितम्? किमयं न राष्ट्रदोषः? सत्यापलापः किं सह्यः? अत्र किञ्चिद्वक्तव्यं विद्यते। सत्यमसत्यं वा वस्तु भवतु, यस्य फले प्रभावो भवति तदेव ग्राह्यं हेयं वा भवति। पृथिवी चलतु, उत वा भचक्रम्; भूकैन्द्रिकं ग्रहभ्रमणं भवतु, सूर्यकैन्द्रिकं वा; यदि फलेऽन्तरं भवति तदा तस्य प्रभावः स्वीकरणीय एव स्यात्। परन्तु भारतीयरीत्या ग्रहादीनां साधनं तेषामुदयास्तादिसाधनं ग्रहणसाधनं भवतु, अथवा पाश्चात्यरीत्या सूर्यकेन्द्राभिप्रायेण ग्रहानयनादिकं ग्रहणसाधनं भवतु, फले विकारो न भवति। एकमेव फलं भवति। तेन तादृशी आपत्तिरुपस्थिता न भवति। यूरोपदेशेऽपि 'कोपर्निकस'-महाशयात्पूर्वं भारतीयैव रीतिरासीत्। इदानीं तत्र बहवो गवेषका नवीनामेव रीतिमनुसरन्ति, तामेव साध्वीमामनन्ति च। परन्तु पूर्वप्रचलितरीत्यामपि फले विसंवादस्तादृशो नासीत्तेन तत्कालपर्यन्तं तत् 'टॉलेमी'-गणकमतं स्थिरमतिष्ठत्। जगति सत्यं जयति नानृतम्। तेनैकस्मिन् दिने सत्यमतस्य जयो भविष्यत्येवेति।

---

# विलुप्तसंवत्सरादिकालनिर्णयः

श्रीसीतारामझाः

श्रीविश्वेशं प्रणम्याहं विचारं विविधं विदाम् ।
विलोक्य युक्तिसंयुक्तं लुप्तवर्षादिकं ब्रुवे ॥
यतोऽत्र विदुषां मध्ये विवादो विद्यतेऽधुना ।
अलुप्ताऽब्देऽपि लुप्ताब्दं वदन्त्यल्पविदो भ्रमात् ॥
तान् विदोऽप्यनुवर्तन्ते जयत्यन्धपरम्परा ।
त्यजन्ति सभयं शुद्धमतोऽयं स्यान्ममोद्यमः ॥

सर्वैरेव ज्यौतिषग्रन्थकारैर्महर्षिवर्यैराचार्यैरार्यैश्च निबन्धकारैर्मैथिलादिविद्वद्भिः शुभकर्मसु क्षयाधिकतिथिमासवल्लुप्ताधिकसंवत्सरावपि त्याज्यत्वेन प्रतिपादितौ । यथाह वसिष्ठः—

सहजां गतिमासाद्य यद्यतीचारगो गुरुः ।
अवशिष्टं पूर्वराशिं न प्रयात्युपभुक्तये ॥
लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु ।

गर्गः—

समं व्रजन् देवगुरुर्यदैव भवेदतीचारगतिप्रपन्नः ।
तदा विलुप्ताब्द इति प्रदिष्टः स्वसंहितायां हि पितामहेन ॥

कश्यपः—

यदि भवेदतिचारगतिर्गुरुर्न पुनरेति निजप्रथमस्थितिम् ।
भवति लुप्तसमा झषकुम्भयोर्वृषभमेषभयोर्यदि न स्थितिः ॥

एवमेव रामाचार्योऽपि—

२०६ गोऽजान्त्यकुम्भेतरभेऽतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः ।
तदा विलुप्ताब्द इहातिनिन्दितः शुभेषु रेवासुरनिम्नगान्तरे ॥

म.म.केशवमिश्र-महेशठक्कुरादिनिबन्धकारा अपि स्वस्वनिबन्धे—

"गुरोर्महातिचारे लुप्तसंवत्सरो भवति। यथा द्वैतनिर्णयादौ—

अतीचारगतो जीवः पूर्वभं नैव गच्छति।
लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु॥"

इत्थमेवाहुः।

अत्र को नामातिचारः? इति तावद् विविच्यते। तत्र शब्दकल्पद्रुमे स्मृतिज्यौतिषोद्धृतव्याख्यानम्—

"अतिचारः—अतिक्रम्य चरणम्। शीघ्रगमनम्। भौमादिपञ्चग्रहाणां स्वस्वराशिभोगकालसमाप्तौ परराशिगमनम्। तत्र पूर्वराशिगमने वक्रातिचारः, परराशिगमनेऽतिचारः। अयं गुरोश्चेदकालो भवति, गुरुर्यदि पुनः पूर्वराशिं नायाति तदा महातिचारस्तेन लुप्तसंवत्सरो भवति।" इत्यादि।

एतेनेदं सिद्ध्यति यद् यदा ग्रहः स्वमध्यम-(स्वाभाविक) गत्या राशिभोगकालसमाप्तितः पूर्वमेवाग्रिमराशिगतो भवति तदा तस्य ग्रहस्यातिचार इति। उक्तं च—

स्वमध्यखेटाद्यदि पूर्वमेव स्फुटोऽग्रभं याति तदातिचारः।
अकालकृच्चाशुभदः पृथिव्यां पश्चाद् व्रजन् साधुफलप्रदः स्यात्॥

एवं स्फुटग्रहो यदा स्वमध्यमादग्रगतो भवेत् तदैव भवितुमर्हति। मध्यमादग्रगतस्तु तदा भवति यदा तस्य स्वोच्चाकर्षणं पूर्वाभिमुखं (स्वभावगत्यनुकूलम्) भवति, यतस्तदा स्वाभाविक-(मध्यम) गतितोऽधिका गतिर्जायते। यदा चोच्चाकर्षणं पश्चिमाभिमुखं भवति तदा स स्वमध्यमात् पृष्ठगतो भवति। यथोक्तं सूर्यसिद्धान्ते—

ग्रहात् प्राग्भगणार्धस्थः प्राङ्मुखं कर्षति ग्रहम्।
उच्चसंज्ञोऽपरार्धस्थस्तद्वत्पश्चान्मुखं ग्रहम्॥
स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद् ग्रहाः।
तत् तेषु धनमित्युक्तं फलं पश्चान्मुखेष्वृणम्॥

अयमाशयः—ग्रहः स्वभावतः पूर्वाभिमुखगमनशीलः । तस्य यदा स्वोच्चाकर्षणं पूर्वाभिमुखं भवति तदा स्वाभाविकगतितोऽधिका गतिर्जायतेऽतस्तत्र मध्यमादग्रगतो ग्रहो भवति, यावच्च स ग्रहो वर्तमानराशौ तिष्ठति तावत् तस्य गतिः शीघ्रा, चरा वा कथ्यते । यदा ग्रहः स्वमध्यमात् पूर्वमेवाग्रिमराशिगतोऽपि भवति तदा तस्य गतिरतिशीघ्रा अतिचरा वा कथ्यते । स गृहश्चातिचारीत्युच्यते । एतदेव गृहस्यातिचरणमतिचार इति निगद्यते । यथोक्तं ज्योतिर्विदाभरणे—

ग्रहोऽतिवेगेन यदा स्वमार्गमाक्रान्तभे गच्छति यश्चरोक्ता ।
तदा गतिस्तस्य विहाय राशिं तमेष्यभे चातिचरा गतिज्ञैः ॥

अस्यार्थः—यदा यो ग्रहोऽतिवेगेन ( स्वाभाविकगतितोऽधिकजवेन ) आक्रान्तभे ( वर्तमानराशौ ) स्वमार्गे ( पूर्वाभिमुखं ) गच्छति तदा तस्य गतिः 'चरा' इति गतिज्ञैरुक्ता । यदा च तं ( वर्तमानराशिं ) विहाय ( त्यक्त्वा ) एष्यभे ( अग्रिमराशौ ) गच्छति तदा तस्य गतिः 'अतिचरा' उक्ता । अर्थात् स एव गृहः 'अतिचारी' इति कथ्यते ।

एवमुपर्युक्तयुक्तिपर्यालोचनयेदमेवावगम्यते यद् गृहो यदा स्वमध्यम-( स्वाभाविक ) गत्या राशिप्रवेशसमयात् पूर्वमेव तं राशिं गच्छति तदा 'अतिक्रम्य गमनात्' तस्य गृहस्यातिचारो बोध्यः ।

एवं गृहो राशिप्रवेशसमये स्वमध्यमादग्रगतः पृष्ठगतो वाऽस्तीति ज्ञानं तत्तद्ग्रहस्य द्वितीयशीघ्रकेन्द्रज्ञानाद् भवितुमर्हति । यतः षड्भाल्पे केन्द्रे 'पूर्वाकर्षणात्' मध्यादग्रतः, षड्भाधिके केन्द्रे 'पश्चिमापकर्षणात्' मध्यात्पृष्ठतो गृहो भवतीति गृहगतिज्ञानां समक्षमेव । इत्येवं सर्वगृहाणामतिचारज्ञानं भवितुमर्हति । परञ्च बृहस्पतिः स्वमध्यमात् पूर्वं पश्चाद्वाऽग्रिम-राशिं प्रविशतीति ज्ञानमन्यथाऽपि सुगमम् । तद्यथा—यतोहि मध्यमबृहस्पतेर्वर्तमानराशिप्रवेशे संवत्सरस्यारम्भः, अग्रिमराशिप्रवेशसमये च तस्य ( वर्तमानसंवत्सरस्य ) समाप्तिर्भवति । यथोक्तं लघुवसिष्ठसंहितादौ—'मध्यगत्या भभोगेन गुरोर्गौरववत्सरः ।' इति ।

 अत एव प्रायः सर्वैरेव पञ्चाङ्गकारैः स्वस्वपञ्चाङ्गे वर्तमानसंवत्सरस्यारम्भसमयस्तस्य पूर्तिसमयश्च लिख्यते ।

अतो वर्तमानसंवत्सरपूर्तिसमयात् पूर्वमेव यदि गुरुरग्रिमराशिगतो भवेत् तदा तस्य 'अतिचारः' इत्युपर्युक्तयुक्तिप्रमाणसिद्धम् ।

अतो गुरोरतिचारः साधारणजनानामपि पञ्चाङ्गदर्शनादेव दृष्टिपथमागन्तुमर्हति । अत एव भुवनदीपककारैः—"गुरुमध्यराशिभोगः संवत्सरः, मध्यराश्यधिकरणकमार्गगति-कालिकस्फुटगुरुपरराशिगमनमतीचारः" इति स्फुटीकृतम् । एवं मैथिलनिबन्धकारैः सर्वजनसुबोधं गुरोरतिचारलक्षणं प्रतिपादितम् । यथा—

पूर्वराशिं परित्यज्य [1]ह्यपूर्णे वत्सरे गुरुः ।
अतीचारस्तदा ज्ञेयः परराशिगतो यदा ॥

अस्यार्थः—अपूर्णे ( न पूर्णः=अपूर्णः=वर्तमान इत्यर्थः । तस्मिन् ) वर्तमाने संवत्सरे गुरुः पूर्वराशिं परित्यज्य परराशिगतोऽग्रिमराशिप्रविष्टश्च यदा भवति तदातिचारो ज्ञेयः । उदाहरणं यथा—वर्तमाने वृषराशिसंवत्सरे पूर्वराशिं ( मेषम् ) परित्यज्य ( अर्थाद्वृषं प्रविश्य ) संवत्सरसमाप्तितः पूर्वमेव यदि परराशिगतः ( मिथुनगतोऽपि ) भवति तदा गुरोरतिचारः । यतो हि एवं स्थितौ गुरुर्वृषप्रवेशसमये मध्यमात् पृष्ठस्थितो निर्गमसमये ( अर्थान्मिथुनप्रवेशसमये ) मध्यममतिक्रम्याग्रगतो भवत्यतोऽतिक्रम्य चरणात् 'अतिचारः' इत्यन्वर्थैव संज्ञा सिद्ध्यति ।

एवं स्थितावेव वर्तमानसंवत्सरे मार्गगत्या स्फुटगुरोः संक्रमणद्वयं भवति, तथा चैकस्मिन् संवत्सरे स्फुटगुरो राशित्रयस्पर्शोऽपि भवत्यत एवान्यैरपि गुरोरतिचारे लुप्तसंवत्सरलक्षणं पर्यायान्तरेण कथितम् । यथा यशोधरतन्त्रे—

गुरुसंक्रमयुग्मवत्समा गदिता सा ननु लुप्तसंज्ञिका ।
विबुधै रहिता शुभे तु याऽधिसमा गीष्पतिसंक्रमोज्झिता ॥

ज्योतिर्विदाभरणे च—

क्षयाऽधिका मार्गवतो गुरोः समा ।
द्विसंक्रमा या क्रमतो विसंक्रमा ॥



१ यस्यारम्भो जातः समाप्तिस्तु न जाता स एवापूर्ण इत्युच्यते ।

या समा मार्गवतो गुरोर्द्विसंक्रमा सा क्षया ।  या च विसंक्रमा साऽधिका समा इति ।

तत्रैव पुनः —

मार्गी पुरोधा गदितोऽग्रधन्वनो द्विराशिचारं कुरुते यदा तदा ।
लुप्ता शरत्*******इति ।

एवं मुहूर्ततत्त्वे—

एकस्मिन् वत्सरे जीवः स्पृशेद्राशित्रयं यदि ।
लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु ॥

अत एव 'वर्तमानराशिसंवत्सरे पूर्वराशित्यागः परराशिगमनं च गुरोरतिचारः' अस्मिँल्लक्षणे पूर्वोक्तानि सर्वाणि लक्षणानि घटन्ते ।

अथातिचारः कतिविधः, तत्र च शुभकर्मसु कियन्ति दिनानि त्याज्यानीति विविच्यते—

अतिचारो द्विविधः—लघ्वतिचारो महातिचारश्च । यथा—यद्यतिचारानन्तरं गुरुः पुनर्वक्रगत्या पूर्वराशिमायाति तदा लघ्वतिचारः । अत्र पूर्वराश्यागमने पूर्वराशिस्थिते गुरौ वर्षसमाप्तिश्चेत् तदाऽष्टाविंशतिदिनानि त्याज्यानि । यथोक्तम्—

गुरौ वक्रेऽतिचारे च वर्जयेत् तदनन्तरम् ।
व्रतयज्ञविवाहादीन्यष्टाविंशतिवासरान् ॥

यदा च पूर्वराश्यागमनेऽप्यग्रिमराशिस्थिते गुरौ वत्सरसमाप्तिस्तदा किञ्चिदधिकदोषत्वाच्छुभकर्मणि पक्षत्रयं त्याज्यम् । यथोक्तम्—

अतिचारगतो जीवः पूर्वभं यदि गच्छति ।
लघ्वतीचारगो ज्ञेयस्तदा पक्षत्रयं त्यजेत् ॥

अथ यद्यतिचारानन्तरं गुरुः पुनः पूर्वराशिं नायाति तदा महातिचारो ( लुप्तसंवत्सरः ) भवति । यतो हि गुरोर्महातिचारे तत्संवत्सरस्य नाम्नो लोपो भवत्यत एवास्य 'लुप्तसंवत्सरः' इत्यन्वर्थैव संज्ञा कृताऽऽचार्यैः । अत्र प्रमाणं तु पूर्वमेवोक्तम् ।

अथ संवत्सरस्वरूपं विविच्यते—

बृहस्पतेर्मध्यमराशिभोगात् संवत्सरं सांहितिका वदन्ति ।

इति गुरोर्मध्यमगत्या राशिभोगकालो बार्हस्पत्यसंवत्सरः । अर्थान्मध्यमबृहस्पते राशिप्रवेशनिर्गमयोरन्तर्गतकालः संवत्सरः । गुरोर्मध्यमगतिस्तु सिद्धान्तग्रन्थे वास्तवी किञ्चिन्न्यूनपञ्चकलामिता । यथा सकलावयवसहिता मध्यमा गतिः = ४।५९।८।२४।५६।३१।३० एतन्मिता प्रसिद्धाऽस्ति । परं चात्यल्पान्तरात् संवत्सरफलादिकथनोपयुक्तत्वाच्च करणग्रन्थे पूर्णपञ्चकलामिता = ५ मध्यमा गतिः स्वीकृता ।

अतः करणग्रन्थस्वीकृतमध्यमगतिवशादनुपातेनैकराशिकलासु संवत्सरमानम् $= \frac{१८००}{५} =$ ३६० दिनमितं सावनवर्षसममेव ।

पञ्चाङ्गे एतन्मितसंवत्सरमानादेव वर्तमानसंवत्सरस्यारम्भपूर्तिसमयज्ञानार्थं भुक्तभोग्यदिनानि प्रसाध्य लिख्यन्ते, तथा च भोग्यदिनाद्यन्तसमये वर्तमानसंवत्सरस्य पूर्तिर्मन्यते पञ्चाङ्गकारैः। परं चेदं संवत्सरमानं वास्तवसिद्धान्तरीतिसाधितसंवत्सरमानात् सावयवैकदिनाल्पं भवति, तथापि संवत्सरादिफलकथने न कापि क्षतिः । परं चातिचारसंभावनायां तु सिद्धान्तगतिसिद्धवास्तवसंवत्सरमानाद् भोग्यदिनादिकं साध्यम् । उक्तं च मकरन्देन—

"करणग्रन्थसाधिततिथ्यादिषु क्वचिद् घटिकाधिकमप्यन्तरं, पतति, अतो घटिकाल्पे तिथ्यादिमाने सिद्धान्तरीत्या तिथ्यादिमानं प्रसाध्य व्रतादिनिर्णयः कार्यः ।"

अत एवातिचारसंभावनायामपि सिद्धान्तसिद्धगतिवशात् संवत्सरमानं ग्राह्यम् । तच्चानुपातेन $= \frac{१८००}{(४।५९।८।२४।५६।३१।३०)} =$ ३६१।२।४।४५ = दिनादिमितं सिद्धयति। अत एवैवंविधमानेन भोग्यदिनाद्यं प्रसाध्यम्, तदन्ते वास्तवसंवत्सरस्य पूर्तिर्भवति, ततः पूर्वं यदि गुरोरग्रिमराशिसंचारस्तदैवातिचारो बोध्यः ।

अत्रेदमपि ध्येयं यद् यदि लघ्वतिचारादग्रिमराशिगतो गुरुर्भवति तदाऽतिचारानन्तरं पक्षत्रयं त्याज्यम् । तथा यदि महातिचारादग्रिमराशिगतो भवेत् तदाऽऽदितोऽन्तं यावत् ३११
समस्तो वर्तमानसंवत्सर एव त्याज्यः । यथोक्तम्—

अतीचारेण यो राशिर्लङ्घितो देवमन्त्रिणा ।
तदादिवत्सरो लुप्तो ह्यनर्हः सर्वकर्मसु ॥

अथ कदा द्विविधोऽतिचारः, कदा च महातिचार एवेति ग्रहगतिवशाद् विविच्यते—

ग्रहस्त्रिधागत्या राशिभोगं करोति, (अर्थाद् वर्तमानराशिं प्रविश्य त्रिधागत्याऽग्रिमराशिं गच्छति)। तद्यथा—क्वचिदेकधाभोगेन, क्वचिद् द्विधाभोगेन, क्वचित् त्रिखण्डभोगेन ।

(१) एकधाभोगेन यथा—ग्रहमार्गः | वर्तमानराशिः | अग्रिमराशिः ▷ग्रहः

(२) द्विधाभोगेन —ग्रहमार्गः | वर्तमानराशिः | अग्रिमराशिः ▷ग्रहः

(३) त्रिखण्डभोगेन —ग्रहमार्गः | वर्तमानराशिः | अग्रिमराशिः ▷ग्रहः

उक्तञ्च—

गच्छन्ति राशितो राशिं त्रिधागत्या खचारिणः ।
कस्मिंश्चिदेकधा भोगाद् द्विधा भोगादथ क्वचित् ॥
क्वचित् त्रिखण्डभोगाच्च नान्यः पन्थाः खचारिणाम् । इति ।

अत्र प्रथमगत्या द्वितीयगत्याऽतिचारे पुनः पूर्वराश्यागमनसंभावनया द्विविधोऽतिचारो भवितुमर्हति । यथा—यद्येकधाभोगेनातिचारे पुनः पूर्वराशौ द्विधाभोगो भवति तदा न महातिचारः, एवं द्विधाभोगेनातिचारे यदि पुनः पूर्वराशौ त्रिधाभोगो भवति तदा न महातिचारः । अर्थादुभयथा लघ्वतिचार एव । अन्यथा महातिचारः ।

तृतीयगत्या (एकराशौ त्रिखण्डभोगेन) राशिभोगे कदाचिदेवातिचारो भवति । यत एवं स्थितौ प्रायो द्वितीयखण्डभोगसमये, तृतीयखण्डभोगसमये वा वर्षपूर्तिर्बहुधा भवत्येव । कदाचिद्यद्येकराशौ खण्डत्रयभोगे–खण्डद्वयभोगेन खण्डत्रयभोगेन वा वर्षपूर्तिर्न भवेदर्थाद्

वर्षपूर्तितः पूर्वमेव गुरुरग्रिमराशिगतो भवेत् तदा तु निश्चितो महातिचार एव। यतो ह्यस्यां स्थितौ पुनः पूर्वराश्यागमनमसंभवं भवतीति सर्वमेव ग्रहगतिज्ञानकुशलैः म.म.महेशठक्कुरैः स्वातिचारादिनिर्णये संक्षेपतः स्फुटं प्रतिपादितं विशदं व्याख्यातं च।

किं च तद्यथाख्याशयमबुध्वैव ग्रहगत्यनभिज्ञैः कैश्चित् पञ्चाङ्गकारैः स्वकीयं 'वदतो-व्याघातम्' अपश्यद्भिरनतिचारेऽप्यतिचारम्, लघ्वतिचारेऽपि महातिचारं प्रकल्प्य प्रतार्यन्ते परप्रत्ययनेयबुद्धयो धर्मभीरवो जनाः। सुबुद्धयो विज्ञास्तु तत्प्रचारितेऽपि मिथ्यातिचारे समाचरन्त्येव शुभकार्याणि।

अथ क्षयाधिकसंवत्सरमासतिथीनां युक्तिः—यस्मिन् मेषादिराशौ स्थिते स्फुटगुरौ एकैकस्य बार्हस्पत्यसंवत्सरस्य ( पूर्तिः ) समाप्तिर्भवति स चाश्विनादिसंज्ञया शुद्धः संवत्सरः कथ्यते। यथोक्तम्—

मेषादिगे गुरौ यो यो वत्सरः परिपूर्यते।
आश्विनाद्यश्च स ज्ञेयः पूर्तिद्वित्वेऽधिकोऽग्रिमः॥

अत एव यस्मिन् राशौ स्थिते गुरौ संवत्सरस्य पूर्तिः ( समाप्तिः ) न भवति स 'नाम्नो लोपात्' लुप्तसंवत्सरः कथ्यते। तथा च यस्मिन्राशौ स्थिते गुरौ संवत्सरद्वयस्य पूर्तिर्भवति तौ द्वावपि वत्सरौ एकनामानावेव भवतः, तत्राऽग्रिमोऽधिसंवत्सर इत्युच्यते।

एवं यस्मिन् मेषादिराशिस्थे सूर्ये चान्द्रमासस्यैकैकस्य पूर्तिः ( समाप्तिरर्थाद् दर्शान्तः ) भवति स चैत्रादिसंज्ञया शुद्धो मासः कथ्यते। यत्र राशौ स्थिते सूर्ये मासस्य पूर्तिर्न भवति स 'नाम्नो लोपात्' क्षयमासो लुप्तमासो वा कथ्यते। तथा च यस्मिन्राशौ स्थिते सूर्ये मासद्वयस्य पूर्तिर्भवति तौ द्वावपि मासौ एकसंज्ञौ, तत्राग्रिमोऽधिमास इत्युच्यते। यथोक्तम्—

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः।
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः॥

एवं यस्यां तिथौ एकैकस्य रव्यादिवारस्य पूर्तिः ( समाप्तिः = सूर्योदयः ) भवति सा शुद्धा तिथिः, तस्मिन् दिने गण्यते। तथा च यस्यां तिथौ वारपूर्तिः ( सूर्योदयः ) न भवति सा

'अगण्यतया' क्षयतिथिरित्युच्यते । तथा च यस्यां तिथौ वारद्वयस्य पूर्तिः ( सूर्योदयद्वयम् ) भवति सा तिथिर्दिनद्वयेऽपि गण्यते । तत्राग्रिमाऽधितिथिस्तिथिमलं वा कथ्यते । उक्तं च—

यां तिथिं समनुप्राप्य ह्युदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानादिकर्मसु ॥

प्रयोजनम्—

शुद्धा हि तिथिमासाब्दा ग्राह्या मङ्गलकर्मसु ।
क्षयाधिकाश्च ते त्याज्या इति प्राहुर्मुनीश्वराः ॥

एवं बार्हस्पत्यमानेन संवत्सरशुद्धिर्नर्मदोत्तरे प्रदेशे ज्ञेया । तद्दक्षिणप्रदेशे तु सौरमानेन संवत्सरशुद्धिर्ज्ञातव्या । यथोक्तम्—

नर्मदोत्तरभागे तु बार्हस्पत्येन वत्सरः ।
तस्यास्तु दक्षिणे भागे सौरमानेन वर्तते ॥

अतस्तत्र एकैकस्मिन् सौरवर्षे एकैकस्य बार्हस्पत्यवर्षस्य पूर्तौ शुद्धः संवत्सरः, वर्षद्वयस्य पूर्तौ क्षयसंवत्सरो भवति, अर्थाद् वत्सरपूर्त्यभावेऽधिवत्सर इति । यथोक्तम्—

एकस्मिन् रविवर्षे गौरववर्षद्वयावसानं चेत् ।
त्र्यब्दस्पृगेनमेव हि विलुप्तसंवत्सरं प्राहुः ॥

इत्यलं पल्लवितेन पुरस्ताद् विज्ञानाम् । इति शम् ॥

---

# भारतीयानां प्राचीनो व्यवहारदर्शनक्रमः

डाक्टरसुभद्रझाः

( २१० पृष्ठतोऽनुवृत्तम् )

प्रत्यर्थिनि समागते प्रथमं प्रतिभूर्ग्राह्यः । तदाह याज्ञवल्क्यः—

प्रतिभूग्रहणम्

प्रतिभूश्च गृहीतव्यः प्राड्विवाकेन कार्यिणः ।
प्रत्यर्थिनि समायाते समुपस्थापनक्षमः ॥

व्यवहारदर्शनाय निश्चितेऽपरस्मिन् दिने यथा वादिप्रतिवादिनाववश्यमेवोपतिष्ठेतामित्येतदर्थं प्रतिभूर्ग्राह्यः । नहि यः कोऽपि प्रतिभूर्भवितुमर्हति । तत्राह याज्ञवल्क्यः—

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
विरुद्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥
नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः ।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
जीवन्वापि पिता यस्य तथैवेच्छाप्रवर्तकः ॥
नाविज्ञातो गृहीतव्यः प्रतिभूत्वक्रियां प्रति ।

यथेदानीं तथा तदानीमपि सर्वथा विश्वासार्हा एव पुरुषाः प्रतिभूत्वेन ग्राह्या आसन्निति भावः ।

प्रतिभूहीनो वादी प्रतिवादी वा राज्ञा रक्षणीयः । यथा—

द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्ब्राह्मचारिभिः ।
शूद्रादीन् प्रतिभूहीनान् बन्धयेन्निगडेन तु ॥

इत्थं कारागारे निक्षिप्तस्यापि वादिनः प्रतिवादिनो वा नित्यकर्मसम्पादने यस्य कस्यापि निरोधो न कर्तव्यः—

'नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ।' इत्युक्तेः ।

इदानीमपि प्रतिभूहीनो कार्यार्थी नेपालदेशे नित्यकर्मसम्पादने कथमपि न निरुध्यते ।

प्रतिभूहीनेन कार्यार्थिना राज्ञा नियुक्तस्य स्वरक्षकस्य साध्यपालस्य प्रत्यहं दिनान्ते दैनिकं वेतनं देयम् । इदानीमपि कृषकेभ्यः करगृहणाय भूमिपालेन प्रेषितस्य साध्यपालस्य दैनिकं वेतनं करं दातुमशक्नुवद्भिः कृषकैरेव दीयते, तथा तदानीमपि व्यवहारः प्रचलति स्मेति मन्यते ।

प्रतिज्ञालेखविधिः

अथ वादिप्रतिवादिनोः समक्षमेव लेखको वादिनः प्रतिज्ञापत्रमभियोगपत्रं समासतो लिखेत् । यतः प्रतिज्ञावचनानुसारमेव व्यवहारः प्रवर्तत इति । तल्लेखने सर्वथा यत्नो विधेयः । तां प्रतिज्ञां राज्ञा प्रचोदित एवार्थी लेखयेत् । तत् प्रथमं लिपिकारः फलके लिखेत् । येन भावेन यया च मुद्रया वक्ता स्वाभिप्रायं वदेत् तत्सर्वं सम्यक् फलके सूचयेत् । यथाह नारदः—

रागादीनां यदेकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत् सर्वं वादिनः फलकादिषु ॥

सर्वमित्युक्तेरनावश्यकमिदमिति विचार्य वादिन उक्तस्य किमपि लेखको न त्यजेत् । अतः परं वाद्यनुज्ञातमन्यदपि वस्तु लिखेत् । वादिनः साक्षिणां चोक्तिर्लेख्या । सति प्रयोजने वादी स्वभाषायां संशोधनमपि कारयितुं शक्नुयात् । एतत्संशोधनं तु तावदेव प्राड्विवाको राजा वा स्वीकर्तुं शक्नुयाद् यावत् प्रत्यर्थिना वादस्योत्तरं न दत्तम् । यथाह नारदः—

शोधयेत् पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥

अथ प्रतिज्ञादोषानाह—

प्रतिज्ञादोषाः

अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।
लेख्यं हीनाधिकं भ्रष्टं भाषादोषा ह्युदाहृताः ॥

असंदिग्धा प्रमाणयुक्ता हि भाषा प्रशस्ता। यदि भाषा भ्रष्टा, नष्टं हि वादिनः कार्यम्। यथाह पितामहः—

परस्परविरुद्धानि यः पदानि निवेशयेत्।
विरुद्धपदसंकीर्णा भाषा तस्य न सिद्ध्यति ॥

यावदर्थो न निश्चितस्तावत् फलके भूमौ वा भाषां लिखेत्। यदा सा भाषाऽदोषा दोषरहिता संजाता तदा तां पत्रे निवेशयेत्। यथाह व्यासः—

भूमौ विलेखयेत्तावद् यावदर्थो न निश्चितः।
ऊनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥
पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्।
न्यूनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥

वादिनः प्रतिवादिनो वा यो लेखक उक्तिं सम्यङ् न लिखेत् स दण्ड्यः—

लेखकस्य दण्डार्हत्वम्

अन्यदुक्तं लिखेद्योन्यदर्थिप्रत्यर्थिनोर्वचः।
चौरवच्छासयेत्तं तु धार्मिकः पृथिवीपतिः ॥

भाषाग्रहणोत्तरं प्रतिवादिने उत्तरदानार्थं कालो दातव्यः। अर्थिना तु काले याचिते तस्य कार्यं नश्यति। यथाह नारदः—

प्रत्यर्थिने कालदानम्

प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव वा।
अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते ॥

यदि वक्तुमसमर्थो वादी तदा तस्मा अपि कालो दातव्यः। यथाह नारदः—

मतिर्नोत्सहते यस्य विवादे वक्तुमिच्छतः।
दातव्य एव कालः स्यादर्थिप्रत्यर्थिनोरपि ॥

नारदमते कश्चिन्मासादधिकं कालमित्थं न लभेत्। गौतममते तु संवत्सरमपि कालं दद्यान्नृपः—

'संवत्सरं प्रतीक्षेताप्रतिभायाम्' इत्युक्तेः ।

अनेकेषु व्यवहारपदेषु नैव कालो दातव्यः । यथाह गौतमः—

'धेन्वनडुत्स्त्रीप्रजननसंयुक्ते च शीघ्रम्' इति ।

याज्ञवल्क्यश्च—

साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥

कात्यायनस्तु—

कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ।
अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने प्रभुः ॥
व्यपैति गौरवं यत्र विनाशस्त्याग एव वा ।
कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत् ॥

कालात्ययेऽपि प्रत्यर्थिनोत्तरेऽदीयमाने वादी जयेत् । नहि राजा सद्य एवास्यामवस्थायां वादिना जितमिति ब्रूयात् । यथा प्रतिवादी उत्तरं दद्यात्तथा यत्नस्तेन पूर्वं कर्तव्यः । यथाह बृहस्पतिः—

वादी जयेत् प्रतिवादी यदि उत्तरं न दद्यात् ।

पूर्वपक्षे यथार्थे तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात्सामादिभिरुपक्रमैः ॥
उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥

उत्तरानुक्तावदण्ड्याः

उन्मत्तमत्तनिर्धूता महापातकदूषिताः ।
जडान्धवृद्धस्त्रीबाला विज्ञेयाः स्युर्निरुत्तराः ॥



प्रत्यर्थिनः कर्तव्यम्

अर्थिना स्वसाध्यसिद्धयै यो हेतुरुक्तः स प्रत्यर्थिना स्वीकर्तव्यः प्रत्याख्यातव्यस्तस्य प्रत्यवस्कन्दनं वा कर्तव्यम् ।

उत्तरस्य चातुर्विध्यमाह व्यासः—

उत्तरभेदाः

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।
कारणं स्यादवस्कन्दो मिथ्या स्यात्साध्यनिह्नुतिः ।।

यदा प्रत्यर्थिना प्रतिज्ञा स्वीकृता तदा अर्थिना किमप्यधिकं न कर्तव्यम् । यदा तस्याः प्रत्याख्यानं कृतं तदैवार्थिना स्वसाध्यसिद्धौ साक्ष्यं प्रमाणमुत्थापनीयम् । यथाह मनुः—

साक्ष्यम्

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा ।
त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ।।

यदा प्रतिवादिना कारणं दीयते तदा तस्यैव साक्षिणः पूर्वं प्रष्टव्याः, अन्यथा वादिनः साक्षिण एव पूर्वं परीक्ष्याः । यथाह याज्ञवल्क्यः—

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ।।
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ।।

नारदस्तु—

आधर्ये पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ।। इत्याह ।

यस्य साक्षिणः सत्यवादिनस्तस्य जयोऽपरस्य च पराजय इत्याह याज्ञवल्क्यः—

विवदतोर्जय-
पराजयनिश्चयः

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ।। इति ।

# भारतीयसंस्कृतौ मानवानां स्वव्यक्तित्व-विकासेऽधिकारः

को.अ.सुब्रह्मण्य अय्यरः

संस्कृतिशब्दोऽयं प्राचीनसंस्कृतवाङ्मये न प्रचुरप्रयोगः। बाढं न प्रयुज्यते इति तु न। दृश्यते तस्य प्रयोगः श्रुतिषु स्मृतिषु च कुत्रचित्। यत्र च दृश्यते तत्र प्रायेण संस्कारशब्दपर्याय-इव लक्ष्यते। अस्मिन् लेखे तु संस्कृतिशब्दोऽयं हिन्दीभाषायामिव 'कल्चर'-शब्दार्थवाचकः। अस्मिन्नर्थे शब्दोऽयं प्राचीनसंस्कृतवाङ्मये कुत्रापि न प्रयुक्तो दृश्यते। 'कल्चर'-शब्दश्च कमर्थं बोधयतीति चेत्; संक्षेपत इत्थं वक्तुं शक्यते—कस्मिंश्चित् समाजे जातैस्तत्रैव च प्राप्तशिक्षैः स्त्रीपुरुषैर्यो धर्मः परम्परागतः, य आचारविचाराः परम्परागताः, याश्च परम्परागता विद्याः प्राप्यन्ते तत्सर्वं 'कल्चर'-शब्देन बोध्यते।

भारतीयसंस्कृतिरिति नाखण्डं किंचिद्वस्तु। तस्या अवान्तरभेदा बहवः पुरा आसन्, अद्यापि सन्ति। श्रुतिषु स्मृतिषु च वर्णिता वैदिकी संस्कृतिरेव तस्या मुख्यं रूपमित्यत्र नास्ति विप्रतिपत्तिः काचित्। यत्तु भारत एव प्राप्तविकासे पालीवाङ्मये, अर्धमागध्या महाराष्ट्र्या वा विरचिते जैनसाहित्ये वा वर्णितं तस्या रूपमुपलभ्यते तत् किंचिद्विलक्षणमेव। दक्षिणभारते संस्कृतवाङ्मयनिर्विशेषं महतादरेण महत्या श्रद्धया च परिशील्यमाने तमिल-(द्रविड) वाङ्मये भारतीयसंस्कृतेर्यद्रूपमुपलभ्यते तस्याप्यस्त्येव किंचिद्वैलक्षण्यम्। इयमेव दशा श्रीगुरुग्रन्थसाहबिति नाम्ना प्रसिद्धे सीखानां धार्मिकग्रन्थे समुपवर्णितायाः सीखसंस्कृतेः। सर्वा अप्येता वैदिक्याद्याः संस्कृतयो भारत एव लब्धजन्मानो भारत एव प्राप्तविकासाश्च। परन्तु सन्ति भारते काश्चित् संस्कृतयो या भारताद् बहिर्लब्धजन्मानोऽपि विदेशीयैः प्राचीनकाल एव भारते समानीता अत्रैव कंचिद्विशिष्टं विकासक्रमं प्राप्तवत्यश्च। यथा दक्षिणभारते विशेषतः केरलदेशे दृश्यमानानां स्वल्पसंख्याकानां सिरियादेशाभिजनानां क्रिस्तुमतावलम्बिनां संस्कृतिः। तेषां हि पूर्वजा ईशवीयप्रथमशताब्द्यामेव भारते समायाता इति श्रूयते। तेषामाचारविचारा बाढं भारतीयाः। ते चापाततो दृश्यमाना आर्यधर्मावलम्बिन इव लक्ष्यन्ते। इस्लामधर्माव-

लम्बिभिररबिभिः समाक्रान्तादीरानदेशात् पलाय्य भारतवर्षे शरणं प्राप्तानां पारसीकानां साम्प्रतिकी संस्कृतिरपि भारतीयसंस्कृतेरेवैकं रूपमिति सर्वसम्मतमेतत्। एवं भारतीयसंस्कृतेः सत्स्वपि बहुषु प्राचीनेष्वर्वाचीनेषु च रूपेषु वैदिकीं संस्कृतिमेव मुख्यरूपत्वेन स्वीकृत्य तत्र मानवानां स्वस्वव्यक्तित्वविकासे कियानधिकार इत्यधुना विचारणीयमस्ति।

प्रश्नोऽयं राष्ट्रसंघटनस्य प्रयोजनमधिकृत्य विचारे क्रियमाणे स्वरसत एव समुल्लसति। किं तत् प्रयोजनमित्यत्र भवति विमर्शकानां मतभेदः। राष्ट्रशक्तिवर्धनमेव राष्ट्रसंघटनस्य मुख्यं प्रयोजनं न प्रजानामभ्युदयः। राष्ट्रशक्तौ परां काष्ठां प्राप्तायां सत्यामेव राष्ट्रस्य प्रभावो वर्धते नान्यथा। प्रजानामभ्युदयस्तावानेव भवितुमर्हति यावता राष्ट्रशक्तेर्हानिर्न स्यात्। शक्तिशालिन्यः प्रजाः कदाचिद् राष्ट्रहितविरोधेन स्वार्थं सम्पादयन्ति, ता निग्रहीतव्याः। अतो राष्ट्रशक्तिसंवर्धनमेव राष्ट्रसंघटनस्य मुख्यं प्रयोजनं भवितुमर्हति। अन्यत् सर्वं गौणमिति केचित्। अपरे पुनः सर्वासामपि प्रजानां स्वाननुमतविध्यपालने न्यायदृष्ट्या परस्परवैषम्यास्वीकारे जन्मसिद्धे स्वातन्त्र्ये चाधिकारमप्रतिहतं मन्यमाना न्याय्यानां विधीनां विधानं तेषां पालनमित्युभयमेव राष्ट्रसंघटनस्य मुख्यं प्रयोजनमित्याहुः। भूयांसो विमर्शकास्तु विधीनां विधानं पालनं च राष्ट्रसंघटनस्यैकमात्रं प्रयोजनं न भवितुमर्हति। प्रजानामभ्युदयार्थं यान्यसंख्यानि कर्माणि सर्वत्रानुष्ठेयानि भवन्ति—यथा बाह्येभ्य आभ्यन्तरेभ्यो वाधिदैविकेभ्य आधिभौतिकेभ्यो वा भयेभ्यो राष्ट्रस्य संरक्षणम्, जनानां गतागतसौकर्यार्थं राजमार्गाणां निर्माणं विविधानां यानानां च परिकल्पनम्, प्रजानामारोग्यसिद्ध्यर्थं तत्र तत्रारोग्यशालानां संस्थापनम्, राष्ट्रे शिक्षाया विद्यानां चोन्नत्यर्थं विविधानां विद्यालयानां प्रतिष्ठापनमित्येवमादीनि। तेषां सर्वेषां यथावदनुष्ठानमेव राष्ट्रसंघटनस्य मुख्यं प्रयोजनं भवितुमर्हतीत्यभ्युपगच्छन्ति; अस्य च महतो व्यापकस्य प्रयोजनस्य सिद्धी राष्ट्रान्तर्गतानां सर्वेषामपि स्त्रीपुरुषाणां स्वस्वगुणदोषानुसारं सर्वतोमुखे विकासे सत्येव भवितुं शक्नोतीति तादृशविकाससिद्ध्यर्थं प्रजानां के केऽधिकारा अपेक्षिताः, किं भारतीयसंस्कृतौ तेऽधिकाराः सिद्धा एव प्रजानामिति प्रश्नः समुल्लसति।

सर्वेष्वपि देशेषु दृश्यते काचित् सामाजिकव्यवस्था। भारते वर्णजात्यादिभिरिवान्यत्रापि तैस्तैर्वर्गैर्विभक्ता दृश्यन्ते मानवाः। तत्तद्वर्गान्तर्गतानां मानवानामन्योन्यमंशतः साम्यं दृश्यतेंऽशतो वैषम्यमपि दृश्यते। मानवानां सजातीयैर्विजातीयैश्चांशतः साम्ये सत्यपि दृश्यते प्रातिस्विकं किंचित् स्वरूपम्। चक्षुरिन्द्रियग्राह्ये शरीर इव तेषां मनसि बुद्धौ चित्तवृत्तिषु

वासनासु प्रतिभायां च भवति कश्चिद्विशेषः। एतैः साधारणैरसाधारणैश्च धर्मैः संवलितं यद् मनुष्यस्य स्वरूपं तदेव तस्य व्यक्तित्वम्। अत्यन्तं महत्त्वयुक्तमिदं मनुष्याणां स्वस्वव्यक्तित्वम्। यतस्तद्विकासाधीना निखिलापि संस्कृतिः। न केवलं मानवानां सुखमयं जीवनं स्वव्यक्तित्व-विकासाधीनं निखिलस्य समाजस्य सर्वप्रकारोन्नतिरपि तदधीना। जनानां स्वव्यक्तित्वविकासश्च समाजे तदनुगुणस्थानप्राप्त्यैव भवितुं शक्नोति नान्यथा। यतो मनुष्याणां स्वव्यक्तित्वविकासा-नुगुणं पूर्वसिद्धमर्थाज्जन्मसिद्धं किमपि स्थानं नास्ति, अत आदौ निष्फलैः क्रमशः सफलैः स्वप्रयत्नैरेव साध्यं तत्। यावत् सर्वेषां स्त्रीपुरुषाणां शक्तौ सत्यां समाजे राष्ट्रे च स्वव्यक्तित्वानु-गुणस्थानप्राप्तावधिकारा न सिद्धा भवन्ति, यावत् तेषां स्वजीवनक्रमनिर्धारणे समाजहिताविरोधि स्वातन्त्र्यं न सिद्धं भवति तावत्तेषां व्यक्तित्वविकासो बाढमसंभवी। तादृशे स्थाने स्थितेन पुरुषेण कश्चिदनितरसाधारणो जीवनमार्ग आश्रयणीयः। तेन योऽनितरसाधारणोऽनुभवः पुरुषेण संचीयते तेनैव भवति तस्य व्यक्तित्वस्य विकासः।

सर्वस्यापि जीवनमार्गस्य पुरुषार्थसिद्धिरेव मुख्यं प्रयोजनम्। भारते धर्मार्थ-काममोक्षा इवान्यदेशेष्वपि तत्तद्दशा एवार्थाः पुरुषार्थत्वेन गण्यन्ते। कुत्रचित् कस्यचित् प्राधान्यमन्यत्रापरस्येतीयानेव भेदः। सर्वैरपि मनुष्यैः कयाचिद् वृत्त्या शरीरयात्रावश्यं करणीया। यदि स्वप्रज्ञानुसारी जन्मसिद्धयोग्यतानुसारी च भवति वृत्तिमार्गस्तर्हि भवेत्तत्राधिकं साफल्य-मिति स्पष्टमेतत्। जन्मसिद्धा योग्यता प्रज्ञा वा कदाचिद् भवति भारते वर्णधर्मानुसारिणी वा जातिधर्मानुसारिणी वा भारतादन्यत्र वर्णजात्यतिरिक्तस्ववर्गधर्मानुसारिणी वा, तदानुगुण्येन स्ववृत्तिमार्गं कल्पयन् पुरुषः प्रायेण स्वजीवनसाफल्यमाप्नोति। कदाचित्त्वेवं न भवति। न सर्वे ब्राह्मणा विद्याव्यसनिनः। केचिद् भवन्ति स्वभावत एव विद्याविमुखाः परं व्यापाराभिरु-चयो व्यापारकुशलाः। नागतिकगत्या ते व्यापारे प्रविशन्ति किन्तु जन्मसिद्धयोग्यताद्योतिक्रिया-भिरुच्या। तेषां व्यक्तित्वविकासो व्यापारे प्रवेशेनैव भवितुमर्हति न विद्याक्षेत्रे पदार्पणेन। एकस्यैव पितुरौरसाः पुत्रा भिन्नरुचयो भिन्नगुणदोषा दृश्यन्ते। कश्चिद् भवति विद्याव्यसनी द्वितीयः कृषिकर्मकुशलस्तृतीयश्च संगीताभिरुचिः। इयं दशा न केवलं भारते, विदेशेष्वपीयमेव स्थितिः। अत एवाधुनिकमनोविज्ञानकोविदैर्जन्मसिद्धयोग्यतायास्तादृशप्रज्ञायाश्च निर्धारणार्थं बह्व्यः प्रक्रियाः समुत्प्रेक्षिताः, या अनुसृत्य तैर्बहवः स्वजीवनमार्गनिर्धारणे स्वयमशक्ता जना उप-दिश्यन्ते। तदुपदेशानुसरणेन च जनाः स्वोचितजीवनमार्गे प्रविशन्ति स्वजीवनं च सफलं कुर्वन्ति। इमाः प्रक्रिया एवांग्लभाषायां 'Aptitude Tests' इति नाम्ना प्रसिद्धाः।

मनुष्यस्य स्वव्यक्तित्वविकासो भूयसा वृत्त्यर्थे कृतैः प्रयत्नैरेव भवितुमर्हति, यतस्तस्य भूयान् समयस्तत्रैव विनियुज्यते। परन्तु मनुष्यः केवलं वृत्त्यर्थमेव यतत इति तु न। स्वसमाजगतैर्जगद्गतैश्चान्यैर्मनुष्यैः सह मैत्र्याद्यनेकविधसम्बन्धस्थापनम्, शास्त्राणां विद्यानां चाभिवृद्ध्यर्थं तत्र तत्र प्रयतमानैर्विद्वद्भिः सह योगसंस्थापनम्, जगति विद्यमानैरनेकविधै-र्विशेषतो मनुष्येण संजातसंपर्कैर्गवाश्वादिभिः प्राणिभिर्व्यवहारः स्वाभ्युदयसिद्ध्यर्थं जगतः कल्याणसम्पादनार्थं च देवतानामाराधनमित्येतादृशानि बहूनि कर्माणि मनुष्यैः सर्वत्र क्रियन्ते। तानि च स्वस्वभावानुसारेण स्वप्रज्ञानुसारेण च क्रियमाणानि व्यक्तित्वविकासाय कल्पन्ते। यदिदं दुःखितानां पीडितानां दलितानां च जनानां दुःखनिवारणरूपं विपुलं कर्म तदपि व्यक्तित्वविकासोपायत्वेन गण्यते सर्वत्र। शास्त्रेष्वप्यत एवेष्टं पूर्तमित्युभयमपि स्वर्गाय कल्पत इति बहुश उक्तम्। न च श्रमेणैव व्यक्तित्वविकासो भवतीति भ्रमितव्यम्। विश्रामोऽपि सर्वस्मिन् जीवनमार्गे स्थानमर्हति। विश्रामेणापनीतश्रमः पुरुषः पुनरपि सोत्साहं प्रयतते। विश्रामसिद्ध्यर्थं प्रायेण सर्वासु संस्कृतिषु तास्ता वैहारिकाः कला प्रादुरभवन्। तास्वपि स्वप्रकृत्यनुसारेण प्रविशन् पुरुषः स्वव्यक्तित्वं विकासयति।

एतादृशः साधारणासाधरणांशसंवलनात्मकस्य व्यक्तित्वस्य जन्मसिद्धप्रातिस्विक-प्रज्ञासंवर्धनरूपः सर्वतोमुखो विकासः समाजान्तर्गतानां स्त्रीपुरुषाणां राजनैतिकसामाजिक-धार्मिकस्वातन्त्र्ये सति तादृशेष्वधिकारेषु च सत्स्वेव भवितुं शक्नोतीति स्पष्टमेव। कीदृशमिदं स्वातन्त्र्यं कीदृशाश्चाधिकारा इत्यधुना विचारणीयमस्ति।

अद्यावधि भारते वा विदेशेषु वा समाजान्तर्गतानां व्यक्तीनां संपूर्णं स्वातन्त्र्यं न कदाप्यभूत्। न च भवितुं शक्नोति। सर्वत्र व्यक्तीनां किंचिन्नियन्त्रणं भवति। अधिकारश्च यो भवति व्यक्तीनां स प्रायः सर्वत्र कर्तव्यसंवलितो भवति। एतावदेव न। तदेव कर्म एकया दृष्ट्या कर्तव्यरूपेण भाति, अपरया च दृष्ट्याधिकाररूपेण। यजनं याजनं च ब्राह्मणानां कर्तव्यम्। यजने याजने च भवति ब्राह्मणानामधिकारः। अधिकाररहितः केवलं कर्तव्य-भारपीडितो भवति दासः। केवलाधिकारभोगी कर्तव्यभाररहितो भवत्युच्छृङ्खलः समाजद्रोही च। अतः स्वातन्त्र्यमधिकार इत्युभयमप्यापेक्षिकमेव जनानां नात्यन्तिकम्। देशकालाद्यनु-सारेण कदाचित् कुत्रचिदधिकं भवति कुत्रचिच्च न्यूनम्।



व्यक्तित्वविकासाय के के अधिकारा आवश्यका इत्यत्राधुनापि वादः प्रवर्तते। रूस-

अमेरिकयोरधुना प्रवर्तमानः परस्परसंघर्षोऽपि प्रश्नमिममधिकृत्य प्रवर्तते । बहूनां मतानुसारेण राष्ट्रान्तर्गतानां सर्वेषां स्त्रीपुरुषाणां स्वव्यक्तित्वविकासायेमेऽधिकारा अपेक्षिताः । निसर्गसिद्ध-प्रतिमानुसारेण शिक्षायां वृत्तिमार्गनिर्धारणेऽधिकारः, तथा रोगादिना वृत्तौ लुप्तायां सत्यां राष्ट्रद्वारा चिकित्सायाम्, स्वातन्त्र्येण स्वेच्छया च तत्त्वान्वेषणे, समाजहितोद्देशेन निरर्गलं स्वमतप्रकटने, निष्पक्षे न्याये, शासकानां संवरणे, स्वाभीष्टपद्धत्यनुसारेणेश्वरोपासनायाम्, शासने न्यायादपेते सति दण्डसहनं विना तद्विरोधकरणे चाधिकारः सर्वैः स्वस्वव्यक्तित्व-विकासार्थमवश्यमपेक्ष्यते । कदाचित्तत्सदृशेषु केषुचिदन्यविषयेष्वप्यधिकाराः स्पृहणीया भवन्ति ।

यदिदं नवीनं विधानमधुना भारतेऽस्माभिः सभासु संभूय विचारं कृत्वा संस्थापितं वर्तते तत्र पूर्वोक्तेष्वधिकारेषु केचिदस्माकं सर्वेषां सिद्धा एव । अस्मिन् नवीने विधाने न वर्णजात्यादिभेदेनाधिकारभेदः सिद्ध्यति । प्रियं चेदं प्रतिभाति भारतीयजनतायाः । परन्तु नवीनमिदं विधानं शुद्धभारतीयसंस्कृतेर्विलसितमिति न केनापि वक्तुं शक्यते । यत आंग्ल-शासकैः संस्थापितया शिक्षापद्धत्या प्राप्तशिक्षैः पाश्चात्त्यविचारपद्धतिभिर्विविधपाश्चात्त्यराज-नैतिकसामाजिकसंस्थाभिश्च संजातसंपर्कैर्विदेशीयशासकैः सह राजनैतिकसंघर्षेण पाश्चात्त्यदेशेषु चिरं स्वल्पकालं वोषित्वा तत्रत्यजीवनपद्धतीनां सम्यङ्निरीक्षणेन च प्राप्तविपुलानुभवैर्विमर्श-नशीलैर्भारतीयैः समुत्प्रेक्षितमिदं विधानं न शुद्धभारतीयसंस्कृत्या संस्कृतमानसैर्जनैः ।

शुद्धभारतीयसंस्कृतौ का स्थितिः । तत्रापि भवन्त्येव स्वव्यक्तित्वविकासे जनाना-मधिकाराः । एतावानेव विशेषो यदधिकाराः सर्वेषां स्त्रीपुरुषाणां न समानाः परन्तु वर्णजात्यादि-भेदेन भिन्ना भवन्ति । प्राप्ताधिकाराणां स्वस्वाधिकारानुसारेण प्रयतमानानां भवत्येव महान् व्यक्तित्वविकासः । परन्त्वत्रायं संदेहः समुल्लसति । जन्मसिद्धशुभवासनासु जातिधर्मविरोधिनीषु सतीषु मनुष्यस्य किं कर्तव्यमिति । अत्र केचित्—'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः', 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' इत्यादिश्रीमद्भगवद्गीतावाक्येषु स्वधर्मपदं जातिधर्मवाचकं मत्वा जन्मसिद्धयोग्यतायां जातिधर्मविरोधिन्यां सत्यां जातिधर्म एवानुसरणीयो न जन्मसिद्धयोग्यतेत्याहुः । श्रीगीतायां बहुत्र स्वधर्मशब्दो जातिधर्मवाचको भवतीत्यत्र नास्ति कोऽपि सन्देहः । परन्त्वेतन्मतानुसारेण तत्तज्जातीयैः स्त्रीपुरुषैरभिरुच्यां योग्यतायां च सत्या-मसत्यां वा स्वस्वजातिधर्मा एवानुसरणीया न जन्मसिद्धा योग्यतेति भगवन्मतं पर्यवस्यति । किं भगवत इदं तात्पर्यं भवितुमर्हति ? श्रीगीतायां कुत्रचित् स्वधर्मशब्दस्य स एवार्थो

भवति यः सहजं कर्मेत्यस्य वा स्वभावनियतं कर्मेत्यस्य वा स्वभावजं कर्मेत्यस्य वा भवति। चतुर्णां वर्णानां कानि स्वभावजानि कर्माणीति स्पष्टं व्याख्यातं श्रीगीतायाम्। स्वभावजेषु कर्मसु जन्मसिद्धप्रतिभावृद्धयनुकूलानि कर्माण्यन्तर्भवन्तीत्यत्र कथं सन्देहो भवितुमर्हति। यत्र जातिधर्मस्वभावजधर्मयोर्नास्ति विरोधस्तत्र काचिदपि शङ्का न समुदेति। यत्रास्ति तयोर्विरोधस्तत्र स्वभावजधर्म एवानुसरणीय इति मतं श्रीमद्भगवद्गीतायास्तात्पर्यविरुद्धमिति वक्तुं न शक्यते।

न चैवं सति कथं भगवताऽनिच्छन्नप्यर्जुनो युद्धाय प्रणोदित इति शङ्का कर्तव्या। यतो नासीदर्जुने वर्णधर्मस्वभावजधर्मयोः कोऽपि विरोधः। अर्जुनस्य युद्धं न केवलं वर्णधर्म आसीत् परन्तु तस्य तत्र जन्मसिद्धा काचिदसाधारणी योग्यताप्यासीदित्यत्र तस्य तत्तदस्त्रशस्त्रप्रयोगेऽनुपमं कौशलमनेकेषु युद्धेषु विजयप्राप्तिश्च प्रमाणम्। यस्त्वर्जुनो महायुद्धप्रारम्भात् प्राक् क्लैब्येन हृदयदौर्बल्येन च पीडितोऽभूत् तेनेदं सिद्धयति यद् व्यक्तित्वविकासो नाम केवलयाधिकारप्राप्त्या न संभवति। प्राप्ताधिकाराणामपि कदाचिद् व्यक्तित्वविकासो न भवति। तत्राभ्यन्तराऽशान्तिरेव मुख्यो हेतुः। साधारणजनानामाभ्यन्तराऽशान्तेर्बहूनि कारणानि भवन्ति। केचिद् महतान्तर्द्वन्द्वेन पीडिता भवन्ति। परस्परविरोधिन्यश्चित्तवृत्तयो वासनाश्च तान् सर्वदा पीडयन्ति। कदाचिदेकस्या विजयो भवति कदाचिदपरस्याः। एतेनाभ्यन्तरसंघर्षेणापहृतशान्तयस्ते विरोधिनीनां चित्तवृत्तीनां समन्वयं सामञ्जस्यं वा कर्तुं न पारयन्ति। असति तासां सामञ्जस्ये भवत्येवावश्यं व्यक्तित्वविकासे प्रतिबन्धः। कदाचित्तु चित्तवृत्तीनां परस्परविरोधेऽसत्यपि तासां सर्वसम्मतसदाचारविरोधो भवति। अयमपि विरोधः पुरुषस्याभ्यन्तरशान्तिमपहरति। कदाचित्तु पुरुषस्येच्छा जन्मसिद्धयोग्यताननुगुणा भवति। वस्तु प्राप्तुमिष्यते तत्प्राप्तौ शक्तिश्च नास्तीति। महदिदमशान्तिकारणं पुरुषस्य। एवं विविधकारणजनितयाभ्यन्तराऽशान्त्या साधारणजनानां प्राप्ताधिकाराणामपि व्यक्तित्वविकास उपरतो भवति। असाधारणपुरुषाणामपि कदाचिन्मूलदर्शनगतेन केनचिद्दोषेण कर्तव्यानुष्ठाने प्रवृत्तिर्न भवति येन स्वव्यक्तित्वविकासः प्रतिबद्धो भवति। यथार्जुनस्य। तस्य हि क्लैब्यं हृदयदौर्बल्यं च तद्व्यक्तित्वविकासे प्रतिबन्धकं संजातम्। तत्प्रतिबन्धकनिवारणार्थमेव श्रीगीतायां भगवतार्जुनस्य मूलदर्शनगतदोषापहरणरूप उपदेशः कृतः।

प्रसिद्धोऽयमुपदेशः सर्वत्र। संक्षिप्यते चेत्थं श्रीमधुसूदनसरस्वतीपादैः—

"तथाहि आदौ निष्कामकर्मनिष्ठा ततोऽन्तःकरणशुद्धिस्ततः शमदमादिसाधनपुरःसरः सर्वकर्मसंन्यासस्ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा

ततस्तत्त्वज्ञाननिष्ठा तस्याः फलं च त्रिगुणात्मकाविद्यानिवृत्त्या जीवन्मुक्तिः प्रारब्धकर्मफलभोगपर्यन्तं तदन्ते च विदेहमुक्तिः। जीवन्मुक्तिदशायां च परमपुरुषार्थालम्बनेन परवैराग्यप्राप्तिर्दैवसम्पदाख्या च शुभवासना तदुपकारिण्यादेया। आसुरसम्पदाख्या त्वशुभवासना तद्विरोधिनी हेया। दैवसम्पदोऽसाधारणं कारणं सात्त्विकी श्रद्धा। आसुरसम्पदस्तु राजसी तामसी चेति हेयोपादेयविभागेन कृत्स्नशास्त्रार्थपरिसमाप्तिः" इति।

भारतीयसंस्कृतेः प्राणभूतेयं प्रक्रिया न केवलं मुमुक्षूणामुपयोगिनी परन्तु संसारिणामपि। अंशतोऽप्यनुस्रियमाणा सा स्वस्वव्यक्तित्वविकासे प्रयतमानानामनेकविधबाह्याभ्यन्तरप्रतिबन्धाननुभवतां संसारिणां स्वोद्देश्यसिद्धौ सहायिका भवति। फलाभिसन्धिराहित्येन भगवदर्पणबुद्ध्या विहितकर्मानुष्ठानेन या सत्त्वशुद्धिः संजायते सा भवेन्मुमुक्षोर्मोक्षप्रदा। मानवास्तु भूयांसो मुमुक्षव एव संसारपङ्के निमग्ना अनेकविधकृच्छ्राणि सहमानाः किंकर्तव्यताविमूढाः प्रायेण सीदन्ति। अस्याः प्रक्रियाया मुख्याङ्गभूता सत्त्वशुद्धिस्तेषामपि सर्वविधाभ्यन्तरद्वन्द्वध्वंसनेन परस्परविरोधिनानां चित्तवृत्तीनां सामञ्जस्यसम्पादनेन च पिहिताः संस्काररूपेण स्थिताः सर्वाः शक्तीः समुद्बोधयति, प्रत्युपस्थितानां कर्तव्यानामनुष्ठाने तान् प्रेरयति, सिद्ध्यसिद्ध्योः समान् करोति, हर्षविषादाभ्यां मोचयति। संक्षेपतस्तेषां व्यक्तित्वमनेकधा विकासयति। व्यक्तित्वविकासे नास्ति सत्त्वशुद्धिसम उपायः।

प्रक्रियेयं प्राधान्येन मुमुक्षूनुद्दिश्य भगवतोपदिष्टेति सर्वविदितमेतत्। मोक्षसिद्ध्यर्थं निखिला सानुसरणीया भवति। निखिलायामनुसृतायां सत्यां पुरुषस्य मोक्षं प्रति क्रमशो या गतिर्भवति सापि व्यक्तित्वविकासस्यैवैकः प्रकारः। कामं मोक्षे निखिलस्यापि व्यक्तित्वस्य लयो भवति। परन्तु व्यक्तित्वविलयात्मिका मोक्षप्राप्तिरपि व्यक्तित्वविकासस्यैव परा काष्ठा। विशेषश्चायं भारतीयसंस्कृतेः। इति शम्॥

---

# लोकसंस्कृतिविकासाय दर्शनभूमिः

श्रीजगन्नाथ उपाध्यायः

संस्कृतेः स्वरूपं स्वभावतोऽस्पष्टमिव प्रतिभाति। नायं तस्या दोषो यतो यैरान्तरबाह्यैराचारविचारकलाश्रमसाधनादिभिः सा विकासमापद्यते सर्वाण्येव तानि देशकालादिभेदमपेक्ष्य परिवर्तनमावहन्ति। अत एतेषां पुञ्जीभूतस्याजस्रं प्रवहतः स्रोतस आकलनं विधानं च दुष्करमिव भवति। अत एव संस्कृतिः कश्चिद् विधिर्न भवति न वा विध्यनुगता। अपि च विधौ हि संस्कृतिरन्तर्यमयति, अतो विधिसहिताऽप्यतीता भवति। विधिषु संस्कृतेरिदमन्तर्यमणं कथञ्चित् संस्कृतेः स्वरूपं प्रकटयति। इदमन्तर्यमणं विभक्तेष्वविभक्तदृष्टिरेव। विभागमनुरुद्ध्य विधिः प्रवर्तते। संस्कृतिर्हि विभक्तेष्वविभक्ततत्त्वमाकलयति। एवमविभक्ततत्त्वमवलम्बमानायाः संस्कृतेः पुरतो विभागानुरोधी विधिश्च्यवते। अत एव च संस्कृत्यपेक्षया शास्त्रविधिरनित्यो भवति, तमपेक्ष्य च संस्कृतिर्नित्येति गीयते। संस्कृतिर्हि नवनवविधिं सावकाशं करोति, विधिर्हि विधेयं प्रसभं विधत्ते, अन्यांश्चापकरोति। संस्कृतिराध्यात्मिकाधिभौतिके उभे अपि तत्त्वे आलम्ब्य प्रवर्तते, अतो द्वाभ्यां सम्पन्ना भवति। मानवस्तत्राध्यात्मशक्तेः केन्द्रम्, अतस्तदीयबुद्धिभावनाऽऽकांक्षास्वैक्यं संपादयन्ती संस्कृतिरिन्द्रियमनोविकारान् संयम्य विविधधर्मदर्शननीतिकलोपासनापद्धतीः पुरस्कृत्य पृथिव्यप्तेजोदेशकालादिषु भूतभौतिकेषु कार्यकारणभावमनुसंधाय सर्वाण्येतानि मानवविकासाय विनियोजयति। एवं कस्याश्चिदपि संस्कृतेः प्राणाः परिवर्तनमेव। एतत्परिवर्तनक्रममाकलय्यैव संस्कृतेर्दैशिककालिकादिविभागोऽपि क्रियते।

संस्कृतेश्चरमो विकासो लोकसंस्कृतिरूपेण भवति। कस्याश्चिदपि संस्कृतेर्यदि लक्ष्यं लोकसंस्कारो न स्यात्तर्हि बहवः सुसंस्कृता अपि व्यक्तयः समष्ट्यनुरोधिन्याः संस्कृतेर्नैव विकासमापादयेयुः। एकमेव तत्त्वं व्यष्ट्यनुरोधेन संस्कारः समष्ट्यनुरोधेन संस्कृतिरिति वक्तुं शक्यते। यावत् संस्कृतिर्लोकमानसं नाञ्चति तावत् कतिपयशुभसंस्काराणां स्तुतिकथैव तत्र तत्र संस्कृतिशब्देन क्रियते। संस्कृतेः सामर्थ्यं तदीयकलासाहित्यादिभिरेव यथार्थतो न परिमीयते, अपि तु व्यक्तित्वविकासाय कियन्तमवकाशं ददातीति मुख्यापेक्षा भवति। वस्तुतो यदिदं व्यक्तित्वमुच्यते तस्योद्भावनमपि मनुष्येषु संस्कृत्यधीनमेव भवति। स्वतन्त्रसमाजतन्त्रस्वभावयोः

सत्तैव व्यक्तित्वम्। स्वसत्ताया निर्बाधं संरक्षणम्, तस्याश्च प्रसारः, अन्यैः सह आसङ्ग इत्यादिमूलैषणानां यथावद् विकास एव व्यक्तित्वविकासः। अयञ्च विकासो भोगमोक्षाभ्यां भवति। भोगस्तर्पणं तृप्तिरिति वा। मोक्षो नाम ज्ञानम्, शोधः। एतौ भोगमोक्षौ परस्परापेक्षावेव सम्पूर्णतां भजेते। ज्ञानशुद्धे वस्तुनि तृप्तिः, तृप्त्यर्थमेव च शुद्धिः। लोकानुरोधेन एतयोर्भोगमोक्षयोः सामञ्जस्यापादनं संस्कृतेः साफल्यम्। संस्कृतिर्यतो व्यक्तिसंस्कारमनुरुणद्धि, संस्कारश्च मानवेष्वखण्डरूपेणैव व्याप्तोऽतः कालदेशकर्मविशेषाणामेव संस्काराणामापादनं संस्कृतेः सर्वथा साफल्यं नावहति। अतश्च लोकवासनानां संस्करणे संस्कृतेः साफल्यम्।

नाविदितं यद् यस्य पवित्रतमभावजातस्य कलायाश्च संकेतो भारतीयसंस्कृत्याख्यया स्वीक्रियते तेषां विकासो नैवैकस्य देशजातिसम्प्रदायकुलपरम्पराविशेषस्य संस्कारेण सम्पन्नः, अपि तु पञ्चाशच्छताब्द्यधिकेन समयेन विविधाचारविचारवज्जातीनामागमनेन मूलनिवासिभिः संघर्षानन्तरमाचारविचाराणामादानप्रदानाभ्यां च सम्पादितः। भारतीयसंस्कृतौ कोट्यधिकदेवानां सहस्राधिकपरस्परविरोधिजनाचाराणामुपासनापद्धतीनां चानेकशोऽनेकधा धर्मग्रन्थानां पञ्चाशदधिकदर्शनानां समवाय आदरः प्रामाण्यं चाद्यापि निर्बाधं जीवति। एतन्महत्प्रमाणं यदस्यां लोकसंस्कृतिः समुन्नतिमधिगन्तुं प्रभवति। विचारसहिष्णुत्वं लोकसंस्कृतेर्बीजमिव। तच्च भारतीयसंस्कृतेः प्रमुखलक्षणत्वेन संरक्षितं तिष्ठति। परंच गतानेकशताब्दीभ्य उत्तरोत्तरं संह्रसदेतन्नवीनज्ञानविज्ञानादीनां समक्षं गतसारमिवावलोक्यते। अतो नात्र कस्यचिद् विमतिर्यदद्यैषा संस्कृतिर्महत्परिवर्तनमपेक्षते। अवश्यं च लोकदृष्ट्या अस्यामनेकास्त्रुटयोऽपि सम्भाव्यन्ते, अतो लोकसंस्कृतिदृष्ट्या अस्याः पर्यालोचनमावश्यकम्। अस्यां च यानि लोकसंस्कृत्युद्बोधकतत्त्वानि तान्यद्योद्भावनीयानि, यदाधृत्य नवविकासः प्रसरेत्।

संस्कृतेर्नवावताराय यान्युपादानानि स्वीक्रियन्ते तेषु दर्शनमेव प्रमुखम्। यद्धि परिवर्तनं संस्कृतेः प्राणा इव भवति तदेव दर्शनस्य स्वरूपम्। दृष्टिर्हि दर्शनम्। दृष्टिभेदाद् दर्शनभेदः। दृष्टिर्हि प्रस्थानभेदाद् भिद्यते। प्रस्थानेष्वपि अनेके दृष्टिकोणा भवन्ति। अत एकस्मिन्नपि प्रस्थाने कोणभेदाद्दर्शनभेदः स्वीक्रियते। प्रस्थानं साधकस्य वासनादिसामग्र्यनुरूपं भवति, परिवर्तनानुरोधी भेद एव च दर्शनानां स्वरूपम्। यथा साधकस्य वासनादिसामग्र्यनुरोधेन प्रस्थानभेदस्तस्माच्च दर्शनभेदः, तथा लक्ष्यस्य स्वरूपभेदादपि दर्शनभेदो भवति। तथाहि—सर्वथा सर्वतोव्यापि अविनिर्मितं तत्त्वातीतमलक्ष्यभूतं तत्त्वं

प्रसृतं विद्यते। तदेव पुनरलक्ष्यं साधकस्य साधनसामग्र्यनुरोधेनाकलितं विनिर्मितमव्यक्तमेव सल्लक्ष्यरूपमापद्यते। लक्ष्यमेव पुनः साधयितुरिन्द्रियाद्यनुरोधेन दृश्यं भवति। एवमलक्ष्यं लक्ष्यं दृश्यं चेति त्रिधा विभागः कर्तुं पार्यते सृष्टासृष्टजातस्य। लक्ष्यं यथा द्रष्टुर्दृष्ट्यपेक्षमाकलितं विनिर्मितं भवति तथा स्वतन्त्रमपि स्वापेक्षं सत् परिस्फुरति। यतो लक्ष्यस्य स्वरूपसतस्तत्त्वस्य क्रियाशक्त्या निरन्तरं यो नवनवोन्मेषो भवति, तस्याः समुन्मिषितायाः क्रियाशक्तेर्द्रष्टुर्दृष्ट्यपेक्षमाकलनं लक्ष्यं भवति। एष नवनवोन्मेषः स्वरूपसतस्तत्त्वस्य स्वाभाविकः। अत एव समस्तस्य सृष्ट्युपादानस्य विधातुः स्वाभाविकमनन्तत्वं प्रतिभासते। अनेनैव क्रियोन्मेषसिद्धान्तेन दृश्यजगतोऽपि सततमुपचयापचयरूपः परिणामः स्वीक्रियते। चतुर्भिः परमाणुभिर्जगत आरम्भो भवतु, त्रिगुणात्मिकायाः प्रकृतेर्ब्रह्मणो वा जगत्परिणामो भवतु; अथवा ब्रह्मणो विवर्तः, मायायाश्च परिणामः स्वीक्रियेत, सर्वथैवमुपचयापचयः सिद्ध्यत्येव। एवं सततं विपरिणतस्य दृश्यसाधनोपप्लुतस्य साधकस्य दृष्टिरपि हठादेव विपरिणता भवति, अतस्तदाकलयितृ दर्शनमपि सर्वथा सर्वदा नवीनमेव भवति। एवमुभयथा दर्शनभेदे स्वीक्रियमाणेऽपि–'अविभक्तं विभक्तेषु' इत्युक्तमेकत्वदर्शनं निर्बाधं संतिष्ठते एव, तदवलम्ब्य च कापि संस्कृतिर्विकसति। अत एतस्याः संस्कृतेर्विकासायाद्य दृष्टिपरिष्कारोऽत्यन्तमपेक्षितः। भारतीयसंस्कृतिरनेकानेकाचारविचारवज्जातिसम्प्रदायानां समाजानां सम्बन्धेन मिथः सामञ्जस्येन संशोधनेन च सम्पाद्यमाना विभिन्नतमानां विरोधिप्रवृत्तीनां सततं प्रवहद्धारामात्रं किमपि शाश्वतिकं तत्त्वमाकलयति। अत एव एतस्याः स्वरूपे नवविचाराय भूयानवकाशो विद्यते। अतोऽद्य दार्शनिकैरवश्यमेका दर्शनभूमिः प्रस्तोतव्या यया मानवस्वरूपम्, तस्य पुरुषार्थः तत्सिद्ध्यै च मार्ग एवं व्याख्यातो भवेद् येन सर्वथा परिवर्तितेऽप्यस्मिन् नवयुगे सुसमञ्जसं भारतीयसंस्कृतेः स्वरूपं परिस्फुटेत्।

चतुर्षु पुरुषार्थेष्वेकैकमपि पुरुषार्थमधिकृत्य नवीनभौतिकविज्ञानस्य नवीनदर्शनानां च साहाय्येन जीवनस्यान्तरबाह्यानि बहूनि तत्त्वान्याविष्कृतानि, तदर्थं शास्त्राणि शास्त्राङ्गानि च निर्मितानि। अद्याऽर्थमभिलक्ष्य न केवलं शास्त्राणि प्रत्युत तद्दर्शनमधिकृत्यैका जीवनव्यापिनी राजनीतिकव्यवस्थाऽपि निर्मितास्ति। एतेषां विस्तारेण एकैकपुरुषार्थेनैव सकलं जीवनं व्याप्तमिव दृश्यते, एतेन प्राचीनः परमपुरुषार्थविचारः सर्वथा आन्दोलितः। अतोऽद्य कस्य पुरुषार्थस्य परत्वं यदधिकृत्य जीवनं प्रवर्तेत ?

चतुर्षु पुरुषार्थेष्वेकस्यैव परमपुरुषार्थत्वमिति न युक्तम्, किन्तु चत्वारः सम्मिलिता एक एव परमपुरुषार्थो भवति। वस्तुतस्तु कामो मोक्षश्च द्वावेव पुरुषार्थौ। तत्रापि द्वाभ्यां काममोक्षाभ्यामेकमेव स्वरूपं सिद्ध्यति, यतः कामस्यैव चरमो विकासो मोक्षे भवति। अर्थधर्मौ तु काममोक्षयोरन्तःसामञ्जस्यापादकावुपायभूतावेव केवलम्। कामः सुखम्। मोक्षः क इति विचारणीयम्। किं कामार्थधर्माणां त्यागः, उत तेषां ज्ञानम्? यद्येते बन्धकाः, अतो बन्धनिवृत्त्यर्थमेषां त्यागः। किं नाम तर्हि बन्धनम्? अज्ञानमेव। तदज्ञानस्य त्यागो ज्ञानेनैव भवति। यदि त्यागो विनाशापरपर्यायः स्यात्तदैकस्मिन् विज्ञाते सर्वमिदं कामार्थधर्मजातं विज्ञातं न स्याद्, यतो यदि सर्वमेव न स्यात्तदा सर्वं विज्ञातं कथं स्यात्? एतावता मोक्षः कामार्थधर्माणां नहि त्यागः, परंच तेषां स्वरूपबोधः। अर्थाज्ज्ञानं साधारणतया ज्ञातस्य विशेषतः शोधनम्। एतेन भोगमोक्षौ सहगतौ सन्तौ परमपुरुषार्थः।

मिलितपुरुषार्थत्वसिद्धौ तदाश्रित्य द्वौ विचारौ प्रस्तोतव्यौ भवतः। प्रथमो जीवनमेकमखण्डं तत्त्वम्। अपरो व्यष्टिसमष्टी अविनाभूते एवाखण्डं जीवनमाकलयत इति। एतत्स्पष्टयितुं किमिदं मानवजीवनमिति किंचिदवधेयम्। किमिदं कर्मफलम्? अतो हेयम्। तर्हि अनशनादिभिः कथं न प्राणत्याग उचितः? अथ प्राणत्यागेन न जीवनचक्रशान्तिः, अपि तु वासनात्यागेन। तर्हि का नाम वासना, कतिधा च सा? स्वार्जितैव बन्धनाधायिका काचिद् व्यष्टौ समष्टौ च प्रसृतैकधा इति। तर्हि समष्टिव्यष्ट्यन्वितया वासनया युक्तस्य वासनात्यागो नाम समष्ट्यविनाभूताया व्यष्टेरखण्डत्वबोधः। एवं व्यष्टिसमष्टी पूर्णजीवनस्य द्वे अविनाभूते रूपे स्तः। अतो व्यक्तौ विराट्सत्ताया अन्तर्भूतिर्विराट्सत्तायां व्यक्तित्वस्य समर्पणमावश्यकम्। एतस्मिन् समर्पणे व्यक्तेः स्वातन्त्र्यविलास आवश्यक इत्येवाखण्डजीवनदर्शनस्य परमार्थत्वम्। कामसृष्टं यदेतद्विशालं जगच्चक्रमनिवार्यमिवास्ति, तत्समष्टेः कर्मणः फलम्। तस्य जगच्चक्रस्य विराजः केन्द्रमिदमेव यदियं व्यक्तिः, तस्याः पूर्णता समष्टिरेव। अतोऽसंगभावाय व्यक्तित्वस्य लयसिद्धान्तो नोचितः, यतस्तस्य लयेऽखण्डदर्शनमेव गलितं स्यात्। अतो व्यक्तित्वस्य शुद्धिरेवापेक्ष्यते न विनाशः। अयमखण्डस्वरूपावबोधः कामार्थधर्मान् विहाय नैव पर्यवस्यति।

३३० यथा मिलितानां चतुर्णां पुरुषार्थानामेकपुरुषार्थत्वमथ च तत्पुरुषार्थस्य परत्वमखण्डजीवन एव पर्यवसितं तथा तदवाप्त्यर्थमाध्यात्मिको नवप्रयोगो धार्मिकी आर्थिकी च व्यवस्था

नितरां भिन्ना भवेयुरेव। केचित् पुरा कर्मभक्तिज्ञानमार्गाणां स्वतन्त्रमस्तित्वमभ्यमन्यन्त। अन्ये द्वयोस्त्रयाणां वा समुच्चयं स्वीकृतवन्तः। अपरे तेषां समन्वयमकामयन्त। परं चाद्य ज्ञानभक्तिकर्मणां भक्तिकर्मज्ञानानां कर्मज्ञानभक्तीनां चक्रवदावृत्तिः स्वीकरणीया। अखण्डजीवनदर्शनस्य कृते त्रयाणां विलासमार्गाणामिव सदातनोऽवकाशोऽस्ति। जाने एतदभिलक्ष्य एतादृशी विचारसरणिरर्वाचीनैराचार्यैः पुरस्कृता। परं ते आवृत्तिं विकासं वा न स्वीकुर्वन्ति।

एवं जीवनस्याखण्डत्वमवाप्तुं संन्यासमूलको मोक्षमार्गो जगतश्च मिथ्यात्ववादः सर्वथा हेयः स्यादेव। यतो दिव्यामसङ्गां निष्क्रियां काञ्चिदवस्थां प्राप्तस्यापि पुरुषधौरेयस्याखण्डसत्ताया अवाप्तिस्तदैव भविष्यति यदा स्वानन्तरूपमपि साक्षात्कुर्यात्। इदं तदैव स्याद् यदि मानवभूमावेव सर्वमानवेभ्यः सा नित्यानन्दभूमिकाऽवतरेत्। यथाऽध्यात्मप्रयोगेऽखण्डत्व-दर्शनाय पूर्वोक्तः परम आदर्शो भवेत् तथैव धार्मिकी आर्थिकी च व्यवस्थापि तदनुकूलैव स्यात्। अतोऽद्य व्यष्टेः समष्टेर्वा मानवस्य जीवनं वर्णाश्रमादिविभागेषु विभज्य तस्मिं-श्चैकस्मिन् विभागे एकस्य पुरुषार्थस्य सिद्धये शासनाधिकारावकाशा न प्रदेयाः। एवं यथा व्यक्त्युत्कर्षाय पातञ्जलमन्यानि च योगदर्शनानि तथा समष्ट्या सहैव व्यष्टेरुन्नतिः स्यादित्येतदर्थमेकं प्रयोगदर्शनं स्यात्। गीतादर्शनमेव प्रयोगदर्शनेष्वद्यापि मूर्धन्यभूतं यद् व्यवहाराध्यात्मयोर्मानसिकमेव समत्वं विदधाति न तु व्यावहारिकम्। परं च सत्याधिगमाय साधनानि सत्यान्येव स्युः, साध्यसाधनयोश्चैक्यं स्थापितं स्यादित्येतदर्थं नवीनेन प्रयोगदर्शनेनाऽपि भवितव्यम्। अपि च ज्ञानलाभाय श्रद्धैव पर्याप्ता। श्रद्धायां च श्रुतिवाक्यानि यथा समन्वयन्ते तथाऽश्रौतानि गुरुवाक्यानि विविधानि च मानवशास्त्राण्यपि। एवं श्रद्धाया एव केवलाया अव्यभिचारित्वं सिद्ध्यति, न तु श्रुत्यादीनाम्। श्रद्धा च विश्वासो नाम, विश्वासः प्रामाण्यमवगाह्य यदि भवति तदा प्रमाबुद्धिरेव, यदि प्रमामप्रमामविगणय्य स्वरूपसती श्रद्धा, या योगसूत्रकारेण प्रज्ञासिद्धये उपस्थापिता, तस्याश्च भाष्यं कुर्वता व्यासेन-'जननीव कल्याणी योगिनं पाति' इत्युक्तम्, वाचस्पतिना च-'चेतसः संप्रसादोऽभिरुचिरतीच्छा श्रद्धा' इत्युक्तम्; तर्हि सा श्रद्धा चेतसो भावविशेषः सिद्ध्यति। अस्या एव विकासो यदि वीर्यस्मृति-समाधिभिः क्रमैः प्रज्ञायां भवेत्तर्हि श्रद्धैव बुद्धिवादस्य जडांस्तर्कान् शास्त्रेष्वन्धश्रद्धां च वारयेत्, तेन शास्त्रबुद्धिवादयोः कलहोऽपि शान्तिं गच्छेत्, प्रज्ञाभूमिश्च सर्वमानवेभ्यः सुलभा स्यात्। 

भारतीयदर्शने नवदृष्टयैव सत्यदृष्टिः, मिलितपुरुषार्थसृष्टिः, अखण्डं जीवनतत्त्वम्, भोगमोक्षयोरैक्यापादनेन तस्यावाप्तिः, कर्मज्ञानभक्तीनां सामञ्जस्यम्, कर्तव्यप्रामाण्याय श्रद्धावाद इत्यादितत्त्वानि नापरिचितानि विद्यन्ते, अपि तु तद्दृष्टेरुद्भावनमेवापेक्ष्यते। क्रियोन्मेषसिद्धान्तो ह्यागमवादिषु स्वरूपविमर्शे वैष्णवेषु नित्यसृष्टौ लीलासृष्टौ वा समष्टिक्रियाणां नवोन्मेषस्वीकारे सुप्रसिद्ध एव। मिलितपुरुषार्थसिद्धान्तो हि-'न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते','सा ब्रूते यः स धर्मः स्यादेको वाऽध्यात्मवित्तमः' इत्यादिमनुयाज्ञवल्क्योक्त्या राजर्षीणां जीवन्मुक्तानां च परम्परया सङ्गच्छते। अखण्डजीवनसिद्धान्तश्च-'सर्वभूतेषु चात्मानम्' इत्युक्त्वा- सर्वभूतानि चात्मनि', 'अविभक्तं विभक्तेषु' इत्युक्त्वा च-'विभक्तमिव च स्थितम्' इत्यादिगीतोक्त्या, योगवासिष्ठस्य-'यथैव भेदोऽस्ति न जीवब्रह्मणोस्तथैव भेदोऽस्ति न ब्रह्मकर्मणोः' इति वचनेन, पिण्डब्रह्माण्डयोरेकत्वसिद्धान्तेन, 'भोगश्च मोक्षश्च करस्थ एव' इत्यागमसिद्धान्तेन च बहुशः सुसङ्गतो भवति। ज्ञानकर्मभक्तीनां समन्वयो भक्तिवादिसन्तपरम्परासु च प्रसिद्ध एव। श्रद्धावादाय–'श्रद्धावान् लभते ज्ञानम्', 'यो यच्छ्रद्धः स एव सः' 'अत्तदीपा विहरथ भिक्खवे' इत्याद्येवालम्।

लोकसंस्कृतेर्विकासस्य मूलभूताय व्यक्तित्वविकासाय व्यक्तेर्नैतिकाचाराणामेव महत्त्वं सर्वोत्कर्षेण प्रतिष्ठापनीयम्। एतदर्थं प्राचीनदर्शनानामयमवष्टम्भ आवश्यको यन्मनुष्यातिरिक्तः कश्चिन्मनुष्यस्य निर्मातृत्वे न हेतुः। महतोऽस्य भवचक्रस्य निमित्तमेषा कर्मसंचिता वासनैव यस्यां मनुष्योऽपि प्रतिष्ठितः। अथवा अन्यो यदि हेतुरस्ति स अद्वितीयः सन्नेवं करुणानिधिरस्ति यो हि करुणया सततमुद्वेलितः सत्त्वानुद्धर्तुमेव प्रयतते, अथ च स शरणमागतेनानागतेन वा सत्त्वेन कथमपि भावितो न भवति। मनुष्यस्यास्तित्वं यतस्तदीयवासनाव्यतिरिक्तं नास्ति, अतस्तदुपरत्या शान्तिरभ्युपेतव्या। अथवाऽस्त्यन्यत् कूटस्थं नित्यं स्वरूपं तदद्वितीयमेवास्ति, तत्प्राप्य च सत्त्वेन स्वरूपप्रतिष्ठेन भवितव्यम्। जगतो या कुशलाकुशलस्थितिः, यया नियोजितो व्यक्तिः स्वमस्तित्वं विवशमिवानुभवति सा समष्टेः कर्मणः फलम्, अतः समष्टिपापानां प्रायश्चित्तमपि व्यष्ट्याऽऽचरितव्यम्। अयमुपरितनो भावो भगवतो बुद्धस्य भागवतानां च वैष्णवानामागमेष्वस्त्येव। एवं प्राचीनं तत्त्वमेवालम्ब्य नवीनः संस्कारः प्रस्फुटिष्यति। अस्यां पुरातनभावभूमावेवाऽऽधुनिकसमाजसिद्धान्तः सुप्रतिष्ठितः स्यादथ च स महात्मगान्धिनः सर्वोदयपद्धत्या आचरितो भवेत्तर्ह्यवश्यं लोकसंस्कृतिर्विकासमीयात्।

# प्राचीनं नाट्यशास्त्रम्

श्रीबलदेव उपाध्यायः

नाट्यशास्त्रस्य विकासोऽध्ययनं चास्मिन् भारतेऽतिप्राचीनकाले एव सम्पन्नमभूत्। विभिन्नैरालोचकैर्नाट्यस्यैव स्वस्या आलोचनायाः केन्द्रबिन्दुत्वमङ्गीकृतम्। कश्मीरवास्तव्या आलोचकशिरोमणयोऽभिनवगुप्तपादा औचित्यस्य रसपरिपाकस्य च दृष्ट्या नाटकस्यैव समस्तवाग्विभूतिष्वग्रगण्यत्वं स्वीकृतवन्तः। दशरूपकात्मकस्य काव्यस्यैव निखिलकाव्यप्राधान्यमिति तेषामभिमतम्—'काव्यं तु मुख्यतो दशरूपकात्मकमेव' इति। अस्तु, इयत्तु निर्विवादं यदालोचनाजगति नाट्यालोचनमेव श्रव्यकाव्यापेक्षया प्राचीनतरम्। अलङ्कारशास्त्रस्याध्ययनं पुरा नाट्यशास्त्रस्योपाङ्गत्वेनैव सम्पद्यते स्म। नाट्यं विविधकलानां समुचितसंविधाने सत्येव याथार्थ्येन सिद्ध्यति। अत एव प्राचीनं नाट्यशास्त्रमेषामुपादेयप्रकाराणामपि विशिष्टं विवरणं प्रस्तौति।

## प्राचीना नाट्याचार्याः

अद्यत्वे प्राक्तनेषु नाट्याचार्येषु भरतमुनेरेव ग्रन्थः समुपलभ्यते। किन्तु तस्यालोचनमस्मानिममेव निष्कर्षं नयति यद् भरतनाट्यशास्त्रमनेकस्याः शताब्द्या अध्ययनस्यानुशीलनस्य च परिणतिरिति। विक्रमपूर्वाष्टमशताब्द्यां पाणिनिनिर्दिष्टौ शिलालिकृशाश्वावेवास्माकं प्राचीनतमौ नाट्याचार्यावास्ताम्। किन्त्वेतत्प्रणीतनटसूत्रयोरद्यावधि न काप्युपलब्धिः। कोहलनामक एको मनीषी नाट्याचार्य आसीत्, येन भारते वर्षे नाट्यस्य लोकप्रियं प्रसारं सम्पाद्य कमनीया कीर्तिरर्जिता। अस्य महानुभावस्य विशिष्टसिद्धान्तानां निर्देशो नाट्यसंगीतयोर्ग्रन्थेषु भूरिशः कृतो विद्यते। वर्तमानस्य भरतनाट्यशास्त्रस्य संवर्द्धनोपबृंहणयोः कोहलस्यापि विशिष्टो योग आसीत्। अत्र प्रमाणमभिनवगुप्तस्याभिनवभारतीनाम्नी भरतनाट्यशास्त्रटीकैव। भरतमतानुसारं नाट्यस्य पञ्चैवाङ्गानि। तद्यथा—त्रिप्रकारकोऽभिनयः, गीतम्, वाद्यं च (आतोद्यम्)। परन्तु कोहलमते नाट्यस्यैकादशाङ्गानि भवन्ति। अस्य मतस्य प्रवेश आधुनिके नाट्यशास्त्रेऽपि ३३३ दरीदृश्यते। तथा हि—

रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः ।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः[1] ॥

[ नाट्यशास्त्र ६।१० ]

अत्र एकादशाङ्गानां निर्देशः स्फुटं परिलक्ष्यते ।

एतानतिरिच्य वात्स्यशाण्डिल्यधूर्तिला नामशेषा एवाद्यत्वे । प्राचीनस्य नाट्यशास्त्रस्य स्वरूपदिग्दर्शक एक एव ग्रन्थो नूनमवशिष्टः, यं ग्रन्थ इत्यनुक्त्वा ग्रन्थराज इति वक्तव्यम् । भरतनाट्यशास्त्रं भारतीयललितकलानां विश्वकोषोऽस्ति । इदं शताब्दीनां साहित्यिकोद्योगस्य सत्प्रेरणायाश्च दिव्यः परिणामः । अस्मिन् सूत्रभाष्यकारिकारूपः क्रमिको विकासः संलक्ष्यते । मूलग्रन्थः सूत्रात्मक आसीत्, तस्योपरि कालान्तरे विशदं भाष्यं प्राणीयत । अस्य भाष्यांशस्य परिचयोऽस्यामी रसभावप्रतिपादकयोः षष्ठसप्तमाध्याययोरुपलभ्यते । ग्रन्थस्य भूयिष्ठोंऽशः कारिकासु निबद्धः । शारदातनयस्य कथनानुसारं भरतनामकौ द्वावाचार्यावास्ताम् । वृद्धभरतेन द्वादशसहस्रश्लोकेषु नाट्यस्य निरूपणमकारि, यस्य संक्षेपो भरतमुनिना षट्सहस्रश्लोकेषु समपादि । वर्तमानस्य नाटयशास्त्रस्य षट्सहस्रश्लोकात्मकत्वादेव 'षट्साहस्री संहिता' इति तस्यापरं नाम ।

## नाट्यस्योत्पत्तिः

भारते ललितकलानामाविर्भावोऽतिप्राचीनकालादेव संजात आसीत् । नाट्यस्योत्पत्तिर्भारतीयप्रतिभाया एव विशिष्टो विलासः । अद्यत्वेऽपि मानसदासतापराभूतानां तादृशानां विदुषां न्यूनता देशे नास्ति ये भारतीयनाटयस्योपरि यवननाट्यस्य प्रभावं स्वीकुर्वन्ति । वस्तुतस्तु भारतीयमनीषिणां प्रभविष्णुप्रतिभाबलेनैव नाट्यस्योत्पत्तिर्भारतवर्षस्य पुण्यभूमावेवाभूत् । नाट्यं वेदतुल्यमेव उपादेयमथ च मानवजीवनस्य कल्याणकारि शास्त्रम् । चतुर्भिर्वेदैरेकैकेन प्रधानोपकरणेन प्रणीतोऽयं नाट्यवेदो देशवर्णयोः सीमितपरिधिमतिक्रम्य समस्तजनानां हृदयावर्जनेन कृतार्थयत्यात्मानम् । भरतानुसारं ब्रह्मणा ऋग्वेदात् पाठ्यम्,

---

१ अभिनयत्रयं गीतातोद्ये चेति पञ्चाङ्गं नाट्यम् ।''' अनेन तु श्लोकेन कोहलमते एकादशांङ्गत्वमुच्यते न तु भरते । [ अभिनवभारती-ख. १ पृ. २६५ ]

सामवेदाद् गीतिम्, यजुर्वेदादभिनयम्, तथाथर्ववेदाद् रसं चादाय नाट्यवेदनामको नवीनो वेदो निर्मितः। तदुक्तं भरतमुनिना—

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥

[ नाट्यशास्त्र १।१७ ]

इत्थं भारतीयालोचनानुसारं नाट्यं नाम सा कला यस्यामभिनयेन साकं पाठ्यस्य योगो वरीवर्ति, तथैव गीत्या सह रससंनिवेशस्तिष्ठति। नाट्यस्य मुख्यं लक्ष्यं मानवहृदया-वर्जनेन सममुदात्तीकरणं नाम। नाट्यस्योद्देश्यं च परिधिसीम्न्यनाविद्धतया सर्वविधमानव-कल्याणसाधनम्।

नाट्यं धर्मप्रवृत्तान् मानवान् धर्ममुपदिशति। क्लैब्यापन्नानां हृदि समुत्साहं फूत्करोति। दुर्विनीतान् निग्रहं शिक्षयति। वेदनाविकलचेतसां हृदि सुखशान्त्योश्च लेपं लिम्पति। भिन्नवृत्तीनां व्यक्तीनां चेतांस्याराधयितुं यदि नाम किञ्चिदेकं शास्त्रं मृग्येत तर्हि तन्नाट्य-शास्त्रमेव। नाट्यकलायां प्रवीणस्य प्रेक्षावतः कालिदासस्येयमुक्तिर्यावती मार्मिकी तावती विशदाऽपि—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥

[ मालविकाग्निमित्र १।४ ]

अतिप्राचीनकाले नाटकाभिनयो बहिराकाशदेश एव समजायत। तत्र नानाविघ्नेषु विघ्नेषु समुपस्थितेषु रङ्गमञ्चस्याविर्भावः समजनि। नाट्यशास्त्रे प्रेक्षागृहस्य सुविस्तृतं विवरणं समुपलभ्यते। प्रेक्षागृहस्य विकृष्टचतुरस्रत्र्यस्रनामानस्त्रयः प्रकारा आसन्। एषु विकृष्टो विस्तृत आसीत्, यस्मिन् देवसम्बद्धानि दृश्यानि प्रदर्श्यन्ते स्म। चतुरस्रस्तु स्पष्टमेव चतुष्कोणः परिमाणे मध्यमाकारश्चासीत्। स च विशिष्य नृपादीनां कृते निश्चित आसीत्। त्र्यस्रस्त्रिकोणा-कारकः प्रेक्षागृह आसीद् यो हि परिमाणे सर्वापेक्षया लघुकायः साधारणजनानां कृते विहित- ३३५

श्चासीत्। प्रेक्षागृहनिर्माणविषये भरतमुनिः सातिशयं वैज्ञानिकोऽस्ति। तन्मते प्रेक्षागृहस्य विस्ताराधिक्यं नितान्तमनुचितम्, यतो हि विस्तृते प्रेक्षागृहे उच्चारिताः शब्दा दर्शकैः सम्यक् श्रोतुं न शक्यन्ते। सुश्राव्यता नाट्यस्य प्रधानो गुणः। तस्य च सिद्धिर्मध्याकाराणां प्रेक्षागृहाणामस्तित्वमाश्रयति। तदुक्तं भरतेन—

मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारितस्वरम्।
अनभिव्यक्तवर्णत्वाद् विस्तरत्वं भृशं व्रजेत्॥

[ नाट्यशास्त्र २।२२ ]

अर्धं प्रेक्षागृहं तु दर्शकेभ्यः सुरक्षितं स्थाप्यते स्म। अर्धं च नाट्यस्य कृते निश्चितमासीत्। अस्याप्यर्धभागो रङ्गमञ्च इत्युच्यते यत्र ह्यभिनयादिर्निष्पाद्यते। पृष्ठतमो भागो रङ्गशीर्षं इति नाम्नाऽभिधीयते। अत्रैव नटानां नेपथ्यविधानमभवत्। प्रेक्षागृहस्य विभिन्नस्थानेषु विभिन्नदेवतानां स्थापनं मुख्यं कार्यमासीत्। इदमारम्भिकं पूजनं पूर्वाङ्गमित्यभिधीयते स्म। अथ चैको विस्तृतः कार्यव्यापारः प्रचलति स्म, यस्यान्तिमोंऽशोऽद्यापि संस्कृतनाटकेषु नान्दीति नाम्नाऽवशिष्टः। नान्द्यन्त एव सूत्रधारादिपात्राणां प्रवेशः। पूर्वरङ्गस्यावसाने श्रोतॄणां हृदयावर्जनार्थं संगीतसंविधानं यत्रोच्चरिता गीतिर्ध्रुवेति नाम्ना विश्रुता। ध्रुवाख्याया गीतेः पञ्च भेदाः—उत्थापनी, परिवर्ता, अपकृष्टा, अड्डिता, विक्षिप्ता चेति। आसां गानं विशिष्टस्वरेण विशिष्टलयमात्राभिश्च सम्पद्यते। आस्वन्यतमाया उत्थापनीध्रुवाया उदाहरणं यथा—

देवं विभुं त्रिभुवनाधिपतिं
कैलाशपर्वतगुहाभिरतम्।
शैलेन्द्रराजतनयादयितं
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकम्॥

## अभिनयः

अधुना प्राचीनकालिकस्याऽभिनयस्य चर्चा विधीयते। आङ्गिकवाचिकाहार्यसात्त्विकभेदेनाभिनयश्चतुर्धा। चतुर्भिरेभिरभिनयैः प्रस्तुतं कथावस्त्वेव दर्शकानां समक्षमभिनेयं याथार्थ्येन प्रकटयति, अथ च तेषां मनोरञ्जनमपि करोति।

(१) आङ्गिकोऽभिनयो दृष्टिमुखहस्तपादादिभिर्विधीयते। भरतेनायं तथा साङ्गोपाङ्गं विवृतो यदद्यत्वेऽपि वैज्ञानिकयुगे तस्य वैलक्षण्यं वैचित्र्यं च स्फुटं प्रतीयते। हस्तैः प्रस्तुताना-मभिनयानां न पञ्चषाः प्रकारा एव प्रत्युताष्टोत्तरशतसंख्याकाः। एषामङ्गहाराणां स्वरूप-ज्ञानमप्यद्यत्वे दुःशकं स्यात्, परन्तु त्रयोदशशताब्द्यां वर्तमानो दक्षिणभारतस्य शासको राजा राजसिंहो धन्यवादार्हो येन चिदम्बरस्थस्य सुप्रसिद्धशिवमन्दिरस्य गोपुरे एषां निखिलानां करणानामुत्किरणं नाट्यशास्त्रस्यावश्यकश्लोकैः साकं सम्पादितम्। इमान्यद्यापि मन्दिरसुषमां संवर्द्धयन्ति। दर्शकहृदि रसोन्मीलनमेव नाट्यस्य प्रधानं लक्ष्यम्। अस्मिंश्च कर्मणि नेत्रविधान-मतीव साहाय्यमाधत्ते। भरतेन षट्त्रिंशत्प्रकारिकाणां रसभावोद्बोधिकानां दृष्टीनां विवरणं स्वग्रन्थे प्रदत्तम्, याभिरभिनेतॄणां मनोभावाभिव्यक्तिः स्पष्टतया दर्शकैरुपलभ्यते।

(२) वाचिकेऽभिनये नटानां पात्राणां च पाठ्यविधानं तिष्ठति। पाठ्यमुखेनैव कोऽप्यभिनेता स्वभावनामभिव्यनक्ति तथान्यपात्रैः साकं कथनोपकथनयोः प्रवर्तते। अत एव भरतेन पाठ्यं नाट्यशरीरं स्वीकृतमस्ति। अथ चास्मिन् कार्ये विशेषो यत्नो विधेय इति तदीयं मतम्—

वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता।
अङ्गनेपथ्यतत्त्वानि वागर्थं व्यञ्जयन्ति हि॥

[नाट्यशास्त्र १५।२]

संस्कृतप्राकृतभेदेन पाठ्यं द्विविधम्। अभिजातपात्राणां भाषा संस्कृता, नीचपात्राणां च प्राकृता भवति। नाट्यस्य पाठ्यं कवितामयं भवति। अतस्तदर्थं दोषपरिहारो गुणालङ्कार-संग्रहश्चावश्यकौ भवतः। औचित्यविधानेऽभिनयसर्वस्वं निहितमस्ति, यद्वस्तु यत्प्रकारकं भवति तस्य तत्प्रकारेणैव प्रदर्शनमौचित्यस्यान्तःपरिधौ परिगण्यते। भरतस्य विधानमतीव साहित्यिकं सरसमुपादेयं चास्ति—

वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः।
गतिप्रचारानुगतं हि पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः॥



[नाट्यशास्त्र १४।६८]

( ३ ) आहार्याभिनये वेषभूषयोराभूषणस्य च विधानं भवति । आभूषणाधिक्ये नटः श्रान्तो भवति । अत एव गुरूणां स्वर्णाभूषणानां स्थाने लाक्षापूरितान्याभूषणान्येव नाट्योपयोगीनि । इदं वर्णनं प्रयोगज्ञस्याचार्यस्य विशालदृष्टेः सूचकम्—

गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ।
गुरुभारावसन्नस्य स्वेदो मूर्च्छा प्रजायते ॥
तस्मान्न सम्यक् च कृतं सौवर्णं भूषणं भवेत् ।
जतुपूर्णाल्परत्नं तु न खेदजननं भवेत् ॥

[ नाट्यशास्त्र २३।४७-४८ ]

अस्मिन् प्रसङ्गे श्मश्रुविधानमपि क्रियते । प्राचीनभारते श्मश्रुधारणप्रथा बाहुल्येनासीत् । अत एव रङ्गमञ्चावतीर्णानां पात्राणां वेषं सभाजयितुमपेक्षितश्मश्रुधारणस्याऽपि विशिष्टो नियम आसीत् ।

( ४ ) सात्त्विकोऽभिनयोऽन्तिमोऽस्ति, यस्मिन् स्त्रीपुरुषाणां नानाचेष्टा हावभावहेलादयश्च प्रदर्श्यन्ते । नाट्येन सह संगीतस्यापि घनिष्ठः सम्बन्ध आसीत् । संगीतप्रयोगेणाभिनयो नितान्तं स्निग्धो मञ्जुलश्च जायते । अतो यथाऽद्यत्वे तथा पुराकालेऽपि रङ्गमञ्चे संगीतस्य साम्राज्यमक्षुण्णमासीत् । नाट्यं प्राचीने काले जीविता कलाऽऽसीत् । तदात्वे नाट्यप्रदर्शनस्य नैकविधाः शैल्य आसन्, यासु प्रवृत्त्यपराख्याश्चतस्रः शैल्यो भरतेन निर्दिष्टाः । दाक्षिणात्यप्रवृत्तेः प्रचारो विदर्भेषु ततो दक्षिणदेशेषु चासीत् । आवन्तिकायां वीरशृङ्गाररसयोः प्रदर्शनस्य प्राधान्यमासीत् । पूर्वभारतस्य प्रवृत्तिरौड्रमागधी । तथा मध्यदेशस्य शैल्याः पाञ्चालीत्याख्याऽऽसीत् । भारतीयनाट्यशास्त्रस्येदं सामान्यं चित्रणम् । एतेनेदं स्पष्टं यन्नाट्यं भारतस्य प्रतिभायाः स्वतन्त्रो विलासः । यवनिकाशब्दमाश्रित्यैव नाट्यस्योपरि 'ग्रीक'-प्रभाव उपवर्ण्यते, किन्तु वस्तुगत्याऽसौ जवनिकाशब्दो न तु यवनिका । प्रयोगो नाट्यस्य साधनम् । दर्शकानां हृदि रसोन्मेषश्च साध्यम् । अस्मिन् व्यवसाये प्राचीनं नाट्यं सर्वदैव समर्थमासीदिति कथनं पुनरुक्तिमात्रम् ।

अनुवादकः—
श्रीरघुनाथपाण्डेयः



---

# अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्

श्रीवासुदेवशरणोऽग्रवालः

अस्माकमयं देशो भारताख्यां भजते। प्रथिता भारती महाप्रजा अत्र निवसति। आसेतुहिमाचलमस्य देशस्य विस्तारः। उत्तरस्यां दिशि हिमवान् पर्वतः, दक्षिणस्यां च समुद्रः। तस्य महार्णवस्योभे पार्श्वे, पूर्वः समुद्रभागो महोदधिः, पश्चिमश्च रत्नाकरः। एते प्राचीने नामनी अधुनापि लोके प्रचलतः। कालिदासः पूर्वपश्चिमसमुद्रभागयोरभिधानं जानीते स्म। यथा—

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम्।
प्राप तालीवनश्याममुपकण्ठं महोदधेः॥

इत्यत्र स पूर्वस्यां दिशि महोदधिं वर्णयति रघोर्दिग्विजयप्रसङ्गे। रामस्यायोध्यां प्रति निवर्तमानस्य—'रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच' इत्यादि-पद्यांशे रत्नाकरदर्शनं च कविनोक्तम्। इमावेव द्वौ समुद्रावधुनातनभूगोलभाषायाम् 'बंगाल की खाड़ी-अरबसागर' इत्यभिधीयेते।

उत्तरस्यां दिशि हिमालयस्य च त्रयो भागाः। यदा वयं हिमालयपर्वतस्याधिरोहणं कुर्मस्तदा इमे त्रयो भागाः सोपानत्रयमिव सुस्पष्टं प्रत्यक्षीभवन्ति। अस्माकं पूर्वजैरेते साधु प्रत्यभिज्ञाताः। सभापर्वणि बहिर्गिरिः, उपगिरिः, अन्तर्गिरिरित्येतेषां नामानि ज्ञायन्ते। 'गिरेश्च सेनकस्य ५।४।११२' इति पाणिनिसूत्रोदाहरणे उपगिरिरन्तर्गिरिशब्दौ दृश्येते। यस्तु भूभागः सम्प्रति 'तराई' इति कथ्यते, स एव बहिर्गिरिनामा। यथा हरिद्वारं प्रारभ्य 'देहरादून'-पर्यन्तं बहिर्गिरिप्रदेशः। तस्मात् किञ्चिदग्रे राजपुरनाम्नः स्थानात् पर्वतारोहणं क्रियते। मसूरीपर्यन्तं च प्रदेशममिव्याप्य यत् पर्वतोच्छ्रयणं तत् सप्तसहस्र-'फुट'-संमितम्। हिमवन्तमारुरुक्षोर्जनस्य दृष्टिपथे सहसैवेदमवतरति। अयमेव उपगिरिनामा हिमवतः प्रदेशः, बौद्धग्रन्थेषु च 'चुल्ल हिमवन्त' इत्यभिधीयते, आंग्लभाषायां च 'लैसर हिमालय' इत्याख्यां भजते। अतः परं हिमवत आरोहणक्रमेण तृतीयं सोपानमायाति। तस्मिन्नत्युन्नतानि हिमवतः शिखराण्यष्टादशसहस्र-'फुट'-समुच्छ्रितानि ततोऽधिकानि च। यथा बदरीनाथ-केदारनाथ-यामुन-

पर्वत-धवलगिरि-गोसाईंथाड-काञ्चनजङ्घाप्रभृतयः। यामुनशिखराद् यमुना प्रभवति, तदेव लोके 'बन्दरपूंछ' इति कथ्यते। हिमवत्पर्वतस्यायं भाग आंग्लभाषायां 'ग्रेट सेंट्रल हिमालय' इति कथ्यते। बौद्धग्रन्थेषु च 'महाहिमवन्त' इतीयमस्य आख्या। संस्कृतभाषायामयमेव 'अन्तर्गिरिः' इत्यभिधीयते।

काव्येषु पुराणादिग्रन्थेषु च हिमालयस्यातीव रमणीयं वर्णनमुपलभ्यते। महाकविकालिदासस्य हिमालयप्रशस्तिर्गौरीगुरोः शैलाधिराजस्य चरणयोरर्पिता पुष्पाञ्जलिरिव मनोज्ञभूता। यत्र गङ्गा तत्रैव हिमवान् शोभायामतिशेते। हिमवत्प्रदेशेषु प्रसृता गङ्गा बदरीकेदारखण्डमभिव्याप्य प्रवहन्ती कनखलसमीपे शैलराजाद् भूमाववतीर्णा भवति। तत्र हिमालये गङ्गा-अलकनन्दा–भागीरथी–मन्दाकिनी–जाह्नवीत्येतानि पृथक् पृथग् गङ्गाप्रवाहाणां नामानि। संस्कृतभाषायां च प्राय एतानि नामानि पर्यायरूपेणैवावबुध्यन्ते। बदरीनाथशिखरस्य समीपादलकाभिधानाद् हिमश्रथप्रदेशादलकनन्दानाम्नी धारा प्रभवति। सा एव सर्वासां मध्ये ज्येष्ठा तस्यामेवान्या गङ्गास्रोतस्विन्यः संगता भवन्ति। केदारनाथशिखराद् या धारा प्रवहति सा मन्दाकिनीनाम्नी रुद्रप्रयागसंगमेऽलकनन्दायां मिलति। तदग्रे च भागीरथी देवप्रयागे अलकनन्दया सह संगता भवति। इयं भागीरथी सा धारा या गोमुखहिमश्रथान्निर्गलति। अस्यामेव 'गङ्गोत्री' इति नामधेये स्थाने उत्तरस्या दिशः प्रवहन्ती जाह्नवी नाम धारा मिलिता भवति। जाह्नवीप्रभवस्थानात् परं त्रिविष्टपो देशः। अत एव यावज्जाह्नवी तावद् भारतवर्षमिति लोकश्रुतिः। एवं जाह्नवीभागीरथीमन्दाकिनीत्येताभिर्धाराभिः सह संगता तासां जलौघैरापूर्यमाणाऽलकनन्दा देवप्रयागादूर्ध्वं गङ्गा इत्यभिधीयते। हृषीकेशहरिद्वारादिस्थानेषु 'गङ्गा' इत्येव नाम लोकविश्रुतम्।

महाकविकालिदासेन यत् कथितम्—'पितुः प्रदेशास्तव देवभूमयः' तत् सत्यमेव प्रतिभाति। हिमवत्प्रस्थेष्वजस्रं प्रवहन्तीनां जलधाराणामुत्पततां निर्झराणां नवनवोफुल्लपुष्पाणां नानाविहगानां हिमाच्छादितशिखराणां नदीद्रोणीनामोषधिवनस्पतीनां पर्वतगुहानां च यादृशी रमणीयता तादृशी न कुत्रचिद् भूम्यामवलोक्यते। हिमवता सहास्मद्देशवासिनां परिचयो नित्यं वर्धमानो भवेत्।



अस्य भारतवर्षस्य प्राक्तनाः सीमानो मध्य-एशियाभूमौ पामीरपर्वतपर्यन्तमभिव्याप्य स्थिताः, स एव प्राचीनभुवनकोशेषु कम्बोजदेश इति नाम्ना कथितः। बौद्धग्रन्थानुसारेण

कम्बोजदेशस्य राजधानी 'द्वारका' इत्यासीत्, सा एवास्मिन् समये 'दरवाज' इति कथ्यते। कम्बोजदेशे 'वंक्षु'-नाम्नी नदी ( = आमू दरिया ) सीमानं विदधति। वंक्षु एव पुराणेषु चक्षुरित्यपि कथ्यते। आंग्लभाषायां 'ऑक्सस' इत्यपि तन्नाम। सा वंक्षुनदी पश्चिम-दिग्वाहिनी, तस्या उत्तरतटे 'उत्तरकुरु' इत्यभिधानो देशः। अयमेव भूप्रदेशो मध्य-एशियायां प्राक्तनः शाकद्वीपः कथ्यते स्म। अत्र अर्जुनदिग्विजययात्राप्रसङ्गे कुमुदपर्वतवासिभिः शकैर्ऋषिकैश्चातिघोरः संग्रामः संबभूव। तद्वर्णनं सभापर्वण्युपलभ्यते। कुमुदपर्वतवासिनो ये शकाः सभापर्वणि वर्णितास्त एव 'हेरोडोटस'-नाम्ना यवनैतिहासिकेनापि वर्णिताः। उभयोर्भूगोल-वर्णनेऽत्यधिकं साम्यम्। यो महाभारते कुमुदपर्वतः स एव तेन 'कोमेदाइ' इत्यभिहितः। यः कुमारपर्वतः सः 'कोमेराइ', य एव मृगाक्षदेशः स एव 'मर्गिआना', यः सम्प्रति 'मर्व' इति कथ्यते। या एव सीता नदी सा एव 'यारकन्द' इति कथ्यते। एवं शाकद्वीपस्यातिविशदं वर्णनं महाभारते उपलभ्यते। शाकद्वीपवासिभिः शकैः सह भारतीयानां परिचयो मध्य-एशियायामेव संजातः। तदानयोरुभयोः प्रदेशयोः सीमान आसन्नवर्तिन्य आसन्। भारतवर्षस्य भूगोलविषये कम्बोजदेशस्य स्थितिरतिमहत्त्वसम्पन्ना। पश्चिमोत्तरस्यां दिशि भारतवर्षस्य सीमा वाह्लीकजनपदपर्यन्तं स्थिता। अस्यां दिशि चत्वारो महाजनपदाः—कम्बोजवाह्लीककपिश-गन्धारनामानः। कम्बोजो व्याख्यात एव। बाह्लीकः प्राचीनसमये 'बैक्ट्रिया' सम्प्रति 'बल्ख' इत्युच्यते। वाह्लीकस्य पूर्वस्यां दिशि वंक्षुनद्या दक्षिणस्यां मौञ्जायनप्रदेशस्य स्थितिः, अयमेव वैदिकसमये मूजावन्त इति प्रसिद्धः। अद्यापि 'मुंजान' इत्युच्यते यत्र मुंजानीति कम्बोजवर्गस्य भाषा जनैराश्रीयते। कम्बोजदेशीयभाषोपभाषासु शवतिर्गतिकर्मा धातुरद्यापि भाष्यते, यथा यास्केन निरुक्ते पतञ्जलिना महाभाष्ये च निर्दिष्टम्। तृतीयो महाजनपदोऽत्र कपिशाभिधानः। स इदानीं 'काफिरिस्तान' इति नाम्ना प्रसिद्धः। पाणिनीयशास्त्रे 'कापिश्याः ष्फक्' इति सूत्रे 'कापिशी' इत्यपि तन्नाम प्राप्यते। तस्मात् स्थानात् कापिशायनं मधु अस्मद्देशे पुराकाले आनीयते स्म। तस्योत्पादिका द्राक्षा 'कापिशायिनी द्राक्षा' इति नाम्ना प्रसिद्धा। प्राचीना कापिशी सम्प्रति 'बेग्राम' इति कथ्यते। तत्र पुरातत्त्वोत्खनने एकः शिलालेखः प्राप्तः, यस्मिन् प्राचीननाम्नो निश्चित उल्लेखः समुपलभ्यते।

जनपदसंनिपातेऽस्मिंश्चतुर्थो गन्धारजनपदः। तस्य द्वौ भागौ—पूर्वगन्धारो यस्य तक्ष-शिला राजधानी, अपरगन्धारश्च यस्य पुष्कलावती ( = चरसद्दा ) नाम नगरी राजधानी। अत्रत्यवासिनः पौष्कला इति भुवनकोशेषु विख्याताः। पूर्वापरगन्धारयोः सीमानं विभजन्

सिन्धुर्नाम नदः। तस्य पश्चिमतीरस्थितो भूमिभागः पारेसिन्धुरिति पूर्वसमये प्रसिद्धः। पश्चिम-गन्धारदेशे 'सुवास्तु'-नाम नदी या 'स्वात' इति कथ्यते। सुवास्तुनदीद्रोणी प्राक्तनसमये 'औद्दायनी' इति कथ्यते स्म। तस्या एव 'उड्डियान' इत्यपि नाम। अस्मिन्नुड्डियानाख्ये देशे पाण्डुकम्बलाभिधानाः कम्बलविशेषा ऊयन्ते स्म। जातकग्रन्थेषु पाणिनीये च शास्त्रे तेषां वर्णनमुपलभ्यते। 'पाण्डुकम्बलादिनिः' इति सूत्रेण पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बलीत्युच्यते।

कपिशगन्धारयोरुत्तरभागे चित्रालाख्यो देशः 'चित्रका' इति भुवनकोशेषु यन्नाम। अयमेव श्यामाकदेशः कारष्करो वा प्रसिद्धः। चित्रालनदी अद्यापि 'काष्कर' इत्यपि नाम धारयति। काष्करसुवास्तुनद्योर्मध्ये एका गौरी (=पञ्जकोरा) नाम नदी, या यवन (ग्रीक) लेखकैः 'गोरियस' इति वर्णिता। गौरीकाष्करयोर्मध्यस्थितो देशः सम्प्रति 'दीर' इति कथ्यते। स एव महाभाष्ये द्वीरावतीको देश इत्युल्लिखितः। तत्र भूभागे कुमा (=क़ाबुल) नद्या उत्तरतटे मोहमन्दनामानः 'पठान'-जातीया निवसन्ति, येषां मधुमन्त इति प्राचीनं नाम। अत्रैव कुमानद्या दक्षिणस्यां दिशि क्रुमु-(वर्तमान कुर्रम) नदीपर्यन्तस्थितो देशः 'तीरा' इत्यभिधानः, स एव महाभाष्ये वर्णितस्तीरावतीको देश इत्यनुमीयते। अस्मिन् प्रदेशे आफ्रीदीसंज्ञकाः पठानजातीया निवसन्ति येषाम् 'आप्रीताः' इति पुरातनं नाम।

सिन्धुनदस्य पूर्वस्मिन् भागे उरशाख्यो जनपदः, यः सम्प्रति 'हजारा' इति कथ्यते। तस्मादप्युत्तरः कश्मीरस्य पश्चिमोत्तरकोणे 'दरद्' इति नाम जनपदः, यः सम्प्रति 'दरदिस्तान' इति प्रसिद्धः। सिन्धुतक्षशिलासमीपे 'सुषोमा' नाम नदी या सम्प्रति 'सोहान' इति नाम वहति। सा ऋग्वेदीयनदीसूक्ते प्रसिद्धा।

'नदीनां सिन्धुषष्ठानां देशा ये अन्तराश्रिताः। बाहीका नाम ते ज्ञेयाः' इति महाभारत-वचनानुसारेण सिन्धुशतद्रु-(=सतलज) नदयोर्मध्ये स्थितो भूप्रदेशो बाहीको (पंजाब) नाम। बाहीकदेशे ये जनपदास्तेषामयं विस्तारः—सिन्धुवितस्तामध्ये सिन्धुजनपदः, यः सम्प्रति 'सिन्ध-सागर-दोआब' इति कथ्यते। अस्योत्तरभागः सक्तुसिन्धुः, दक्षिणभागश्च पानसिन्धुरिति प्राचीनसमयेऽभिधीयेते स्म। पानसिन्धुदेशे क्षीरपानं प्रधानं भोजनम्। तत्समीप एव

शिवीनां विषय उशीनरजनपदः। व्याकरणशास्त्रे-'पानं देशे' इति सूत्रोदाहरणे क्षीरपाणा उशीनरा इति प्रसिद्धम्। वितस्तायाः (झेलम) पश्चिमे दिग्भागे केकयो नाम जनपदः, यत्र

सैन्धवः पर्वतः। स एव सम्प्रति 'खिउड़ा' इति कथ्यते। अस्मिन्नेव स्थाने सैन्धवाख्यलवण-स्योत्पादनं भवति। वितस्तेरावती-(=रावी) नद्योर्मध्ये उत्तरस्मिन्भागे मद्रनामा महाजन-पदः। शाकलं नाम नगरं तस्य राजधानी, यः सम्प्रति 'स्यालकोट' इति कथ्यते। अत्रैव मद्राधिपतिः शल्यो राज्यं चकार। अस्यापि द्वौ भागौ–पूर्वमद्रश्चन्द्रभागेरावतीमध्ये (चद्रभागा =चनाव) अपरमद्रश्च वितस्ताचन्द्रभागयोर्मध्ये। मद्रदेशे प्रवहन्ती देविका (=देग) नाम नदी इरावत्या सह मिलति। अस्या एव तीरे भवाः शालयो दाविकाकूलाः शालय इति कथ्यन्ते।

इरावतीविपाशयोः (विपाशा=व्यास) मध्ये दक्षिणभागे क्षुद्रका नाम वीरक्षत्रियाः, मध्यभागे कठा येषां काठकं नाम चरणं (छन्दोब्राह्मणानामध्येतॄणां समूहः) लोकेषु विश्रुतम्, उत्तरभागे च उदुम्बरनामानः क्षत्रिया औदुम्बरायणं देशमध्यवसन्, यः सम्प्रति 'पठानकोट' इति कथ्यते। अयमेव त्रिगर्त-(=कांगड़ा) नाम्नः प्रदेशस्य प्रवेशमार्गः। चन्द्रभागेरावती-विपाशाख्यनदीनां द्रोणीत्रयस्य समुदितो देशस्त्रिगर्त इत्यभिधीयते। अत्रैवैको भागः कुलूताख्यो जनपदः, यः सम्प्रति 'कुल्लू' इति प्रसिद्धः।

पञ्चनदस्य दक्षिणपूर्वस्यां दिशि सरस्वत्या दक्षिणे तटे यो देशो विस्तृतः स भारतीये-तिहासे महत्त्वेनातिशेते। अत्रैव भरतो नाम जनपदः, यस्य प्राच्यभरत इत्यपि संज्ञा। अस्मिन् प्रदेशे कुरुक्षेत्रमुत्तरस्मिन् भागे, कुरुजाङ्गलं (=हरियाना) च दक्षिणपश्चिमस्यां दिशि। सरस्वतीयमुनयोर्मध्ये कुरुजाङ्गलं कुरुक्षेत्रं च विस्तृते। गङ्गायमुनयोर्मध्ये कुरुराष्ट्रं कुरुजनपदो वा, हास्तिनपुरं नाम नगरं तस्य राजधानी। यमुनाया उद्गमप्रदेशे कुणिन्दाख्यो जनपदः, रोहीतकं नाम यन्नगरं तत्र यौधेयगणस्य राजधानी। एते रोहीतकाः कस्मिंश्चित्समये कार्तिकेय-भक्ता आसन्निति महाभारते श्रूयते। एवं बहुशः प्राक्तनभूगोलविषयस्य विस्तारः। स च क्रमेण वर्णयिष्यते।

(सावशेषम्)

---

# गीर्वाणवाण्या गौरवम्

श्रीत्रिभुवनप्रसाद उपाध्यायः

विदितमेव तत्रभवतां श्रीमतां यन्निखिलसंसारे संस्कृतभाषायाः कीदृशं गौरवमासीत्पुरा। भाषाशास्त्रतत्त्वज्ञैः सर्वैरपि देशीयैर्वैदेशिकैश्च पण्डितैरस्या अनन्यसाधारणगुणवत्त्वं वैज्ञानिकत्वं च मुक्तकण्ठैर्मुहुर्मुहुः प्रशंसितम्। इदानीमपि विश्वस्य सर्वासु भाषासु प्रत्यक्षतोऽप्रत्यक्षतो वास्या बीजमन्तर्निहितं विद्यते; अतः सर्वासां भाषाणामियं जननीति नात्र कश्चित् विवादः। अस्यामेवैतद् वैशिष्ट्यं यदत्रैकार्थस्य वाचका अनेके सार्थकाः पर्यायशब्दाः सन्ति; अतोऽस्यां कस्यापि वस्तुनो गुणदोषा आकारप्रकाराश्च पर्यायशब्दैरेव सम्यग् ज्ञातुं शक्यन्ते। संस्कृतं विहाय नान्यासु भाषासु सामर्थ्यमेतत्।

संस्कृतं न केवलं भाषाविज्ञानदृशैव मान्यं गौरवास्पदं च, अपि तु भारतीयानामस्माकं भारतीयसंस्कृतेर्निधानम्। अत्रैव विश्वसाहित्यस्य प्राचीनतमा ग्रन्था वेदा ब्राह्मणा आरण्यका उपनिषदश्च सन्ति। अत्रैव शिक्षाकल्पनिरुक्तव्याकरणज्योतिश्छन्दःशास्त्राणि च सन्ति। किमधिकम्—अर्थशास्त्रम्, संगीतशास्त्रम्, कृषिविज्ञानम्, चित्रशिल्पम्, आयुर्वेदः, वनस्पतिविज्ञानम्, शकुनशास्त्रम्, सामुद्रिकम्, मल्लविद्या, पुराणेतिहासं सर्वमपि मानवजीवनोपयोगि साहित्यं लौकिकमलौकिकं च दर्शनसाहित्यमपि विद्यतेऽस्मिन्।

एतेन विविधसाहित्यसम्पत्तिप्राचुर्येणैवासीत्कश्चित्कालो यदा संस्कृतं राष्ट्रभाषासीत्। आबालवृद्धम्, आराजरङ्कम्, आपामरप्राज्ञं च तस्याः सर्वजनीनप्रचारविषये नहि कस्यापि सन्देहलवस्यावसरः। नेदमविदितं पुरातत्त्वज्ञानां विदुषां यदिदानीमपि लब्धशिलालेखताम्रपत्रादिभिरस्याः प्राचीनत्वं राष्ट्रभाषात्वं सर्वजनीनत्वं च द्योत्यते। पुरा स्वतन्त्रे भारते हिन्दुनृपतीनां समृद्धिकाले संस्कृतमेव जनव्यवहारेषु राजकीयव्यवहारेषु च सर्वत्र प्रचरितमासीत्। भोजराजकाले तु न केवलं ब्राह्मणक्षत्रियवैश्यानां शूद्राणामपीयमेव व्यवहारभाषासीत्। भोजप्रबन्धे—'कुम्भकारोऽपि यो विद्वान्स तिष्ठतु पुरे मम।' इति राजनिर्देशात्, 'काव्यं करोमि

नहि चारुतरं करोमि''''कवयामि वयामि यामि' इति कुविन्दवचनाच्चेयं परिगणितजातीयानां कुविन्दादीनामपि भाषासीत् । किमधिकम्—

जगद् ध्रुवं स्याज्जगदध्रुवं स्यात्कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनमिश्रधाम ॥

इति केनचित्पान्थेन पृष्टाया दास्या वचनेन चैषा न केवलं मनुष्याणां तत्पालितानामनुकृतिपराणां शुकसारिकाणां पशुपक्षिणां च भाषासीदिति स्पष्टमेव प्रतीयते ।

साम्प्रतिकहिन्दीभाषाया इव प्राचीनकाले—'अन्वध्यायं भाषायाम्' इति निरुक्तात्, 'भाषायां सदवसश्रुवः' ( ३।२।१०८ ) 'प्रथमायाश्च द्विवचने भाषायाम्' ( ७।२ ८८ ) इत्यष्टाध्यायीसूत्राभ्यां च भाषात्वेन व्यवहारस्तस्याः सर्वजनीनं प्रचारं द्योतयति । 'प्रत्यभिवादेऽशूद्रे' ( ८।२।८३ ) इति सूत्रेऽशूद्रग्रहणेन, नाटकेषु संस्कृतभाषाभाषिभिः पात्रैः सह संस्कृतेतरप्राकृतभाषाभाषिणां नीचपात्राणां वार्तालापेन च न केवलमस्याः प्रचारः शिक्षितेषु कुलीनेषु किन्तु पामरजनेष्वपि निर्बाधमासीदिति स्पष्टमेव ज्ञायते ।

प्राचीनकाले भारतेऽस्मिन्नस्याः प्रभावातिशयस्य प्रचाराधिक्यस्य च विषये किमु नाम वक्तव्यम् । इयमेव—

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

[ मनुस्मृति १२।१०० ]

इति वचनाच्च भारतीयानां जीवनयात्राया नानाविभागेषु प्रतिष्ठितासीत् ।

"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां भूतविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि" इति छान्दोग्येन,

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैताः''''
वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ॥

इति चतसृणां विद्यानां चतुर्भ्यं आश्रमेभ्यो वर्णेभ्यश्चोपयोगितां प्रतिपाद्य—

यद्यत्स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम् ।
शक्तो मूकोऽपि यत्कर्त्तुं कलासंज्ञं तु तत्स्मृतम् ॥

इति शुक्रनीत्या चात्र नानाविधविद्यानां चतुःषष्टिकलानां च भेदेन संस्कृतवाङ्मयस्याकरत्वं लोकव्यवहारस्य जीवनयात्रायाश्च नानाविधोपायैः सर्वजनोपयोगित्वं स्पष्टमेवानुमीयते ।

संस्कृतस्य न केवलं स्वीयजन्मभूमौ भारतवर्षे एव प्रचारातिशयः ; अपि तु देशदेशान्तरेष्वप्यासीदिति प्रतीयते । विशालस्य भारतसाम्राज्यस्य राष्ट्रभाषेयं पुरा तदुपनिवेशेष्वपि प्रतिष्ठितासीत् । हिन्दमहासागरान्तःप्रदेशेषु जावासुमात्राबालिप्रभृतिद्वीपेषु साम्प्रतमपि समुपलभ्यमानैः प्राचीनतमभारतीयसंस्कृतग्रन्थरत्नैर्मन्दिरध्वंसावशेषैः संस्कृतभाषयोट्टङ्कितशिलालेखैश्चास्याः प्रचारोऽनुमीयते । सुदूरवर्त्तिनि 'एशिया माइनर' प्रदेशेऽपि समुपलब्धप्राचीनशिलालेखेषु इन्द्रवरुणमित्रप्रभृतिभिर्वैदिकदेवताशब्दैः ज्ञातुं शक्यतेऽस्याः प्रचारः । किं बहुना—'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति । विकार एवैनमार्या भाषन्ते शव इति', 'महान् हि शब्दस्य प्रयोगविषयः, सप्तद्वीपा वसुमती त्रयो लोकाः...' इति महाभाष्येण चास्याः प्राक्कालीनः सार्वदेशिकः प्रचारातिशयः स्पष्टमेवोद्घोष्यते । अनेन, 'स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' इति मनोर्डिण्डिमघोषेण च भारतीयसंस्कृतेर्व्यापकत्वमनायासेनानुमातुं शक्यते ।

इदानीं देशे विदेशे च स्त्रीणां सर्वतोभावेन पुरुषैः सह साम्यम्, समानमेव स्त्रीपुरुषयोः कर्तव्यक्षेत्रमिति विषयमवलम्ब्य विवादः श्रूयते । पाश्चात्यदेशेषु यथा स्त्रीपुरुषयोः कुत्रापि न कश्चित् भेदस्तथैव भारतेऽपि भेददृष्टिं विहाय, उभयोः साम्यप्रतिपादने नित्यमेव नूतनस्तर्कः श्रुतिपथमायाति । किमधिकमत्रापि स्त्रीणां सैन्यसंघटनम्, राजकीयविभागेषु नियुक्तिः, आंग्लमहाविद्यालयेषु विश्वविद्यालयेषु च सहशिक्षणं पाश्चात्यरीत्यैव साम्प्रतं प्रचलति । परं पुरा स्वतन्त्रे भारते महर्षिभिरुभयोः प्रकृतिं तत्प्रदत्ताधिकारं शारीरविज्ञानं चाधीत्य पृथगेव कार्यक्षेत्रं निरूपितम् । भारतीयसंस्कृतौ गार्हस्थ्यसुखसम्पत्त्यर्थं पुरुषाणां गृहाद्बहिः स्त्रीणां चान्तः कार्यक्षेत्रं प्रतिपादितम् ।



श्रीवात्स्यायनमुनिप्रणीते कामसूत्रे भार्याधिकारिकेऽधिकरणे प्रथमाध्याये बहुषु सूत्रेषु भारतीयनारीणां कार्यक्षेत्रं निगदितमिति तत उद्ध्रियन्ते कानिचित्सूत्राणि—

"भार्यैकचारिणी गूढविश्रम्भा देववत्पतिमानुकूल्येन वर्तेत।"

"वेश्म च शुचि सुसंमृष्टस्थानविरचितविविधकुसुमं संश्लक्ष्णभूमितलं हृद्यदर्शनं त्रिषवणाचरितबलिकर्मं पूजितदेवायतनं कुर्यात्।"

"गुरुषु मन्त्रवर्ग्येषु भृत्यवर्गेषु नायकभगिनीषु तत्पतिषु च यथार्हं प्रतिपत्तिः।"

"परिपूतेषु च हरितशाकवप्रानिक्षुस्तम्बाञ्जीरकसर्षपाजमोदशतपुष्पातमालगुल्मांश्च कारयेत्।"

एभिश्चतुर्भिः सूत्रैर्नारीणां पतिसेवा, गृहशुद्धिस्तत्सज्जीकरणं च, देवपूजनम्, गृहस्थेषु गुरुजनेष्वाश्रितेषु च यथोचितो व्यवहारः, गृहोद्याने हरितशाकानां वृक्षाणां चावरोपणं सम्यङ्निरीक्षणं च कथितम्। ततोऽपि विशिष्टमायव्ययनिरीक्षणम्, वस्त्रनिर्माणम्, भृत्यानां कर्मणि नियोगः, कृषिपशुपालनादीनि च बहूनि गार्हस्थ्यकार्याणि समुपदिष्टानि। यथा—

"सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात्।"

"भोजनावशिष्टाद्गोरसात् सारग्रहणं तथा तैलगुडयोः, कर्पासस्य च सूत्रकर्त्तनम्, सूत्रस्य वानम्, शिक्यरज्जुपाशवल्कलसंग्रहणम्, कुट्टनकण्डनावेक्षणम्, आचाममण्डतुषकणकुटयङ्गाराणामुपयोजनम्, भृत्यवेतनभरणज्ञानम्, कृषिपशुपालनचिन्तावाहनविधानयोगाः, मेषकुक्कुटलावकशारिकापरभृतमयूरवानरमृगाणामवेक्षणम्, दैवसिकायव्ययपिण्डीकरणमिति च विद्यात्।"

एतेन स्त्रीणां पृथग् गृहान्तः कार्यक्षेत्रम्, माध्यमिकपाठशालां यावद् व्यवहारोपयोगि शिक्षणं च प्रतिपादितम्। यथा पूर्वमपवादोऽप्यासीत्तथैवेदानीमपि भवितुमर्हति। परं सर्वसाधारणानां विश्वविद्यालयपर्यन्तमनुधावनं न शोभनः पन्थाः। यदि भारतीयामिमां पद्धतिमवलम्ब्य भारतीयनारीणां शिक्षणं भवेद् यथा पूर्वमासीत्तर्हि भारतीयानां गृहे सुखशान्तिसमृद्धिः स्यात्। पुनरपि भारतीयनारी गृहलक्ष्मीः शूरवीराणां विदुषां च जननी खनिश्च भवेत्।

साम्प्रतमधिकं खाद्यान्नमुत्पादयतेत्यान्दोलनं देशस्य कोणे कोणे प्रचलति। कृषिप्रधानेऽपि भारतेऽन्नाभाव इति महदाश्चर्यमपरदेशवासिनाम्। परमस्ति कारणमत्रापि। जनानां बाहुल्यं कृषिसाधनानां चाभावोऽत्र प्रधानम्। पुरासीत्कृषिरेव धनमत्रत्यानाम्। सहस्राब्द्यनन्तरमपि

सैव कृषिपद्धतिरिदानीमपि भारतीयकृषकैराश्रीयते। संस्कृतवाङ्मये वेदोपनिषत्पुराणेषु च बहुत्र कृषिमुद्यानरोपणं चाधिकृत्य महर्षिभिः प्रतिपादितम्।

यजुर्वेदे कृषीवलैः प्रार्थ्यते—अस्माकं हलाग्रभागस्थास्तीक्ष्णा लौहफालाः सुखेन भूमिं विलिखन्तु। हलवाहाः सुखेन भूमिं कृष्ट्वा वृषभैः सह गृहमभिगच्छन्तु। वरुणादित्यौ च जलेन भूमिं सिञ्चन्तौ शस्यानि सफलानि कुरुतमस्माकम्। यथा—

शुनं सुफाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्त्तनास्मे॥

[ यजुर्वेद १२।६९ ]

एवं तत्रैव कृषका हलैः परिष्कृते क्षेत्रे बीजानि वपत। वेदमन्त्रैः शस्यानि पुष्टानि भवेयुः। अल्पीयसैव कालेन दात्रेण छिन्नं पक्वं शस्यमस्मद्गृहमागच्छत्विति मन्त्रेणैकेन वपनं समादिश्य शस्यसाफल्यं प्रार्थ्यते। यथा—

युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम्।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्॥

[ यजुर्वेद १२।६८ ]

एवं भुक्तमन्नं सर्वथा नैरोग्यकरं हितकरं च भूयादिति कामयमानैरोषधिरेव प्रार्थ्यते तैः। अथ च—

यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः।
ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव॥

[ यजुर्वेद १२।८६ ]

हे ओषधयः, यस्य रोगिणः सर्वान् शरीरावयवान् सर्वांश्च ग्रन्थीन् व्याप्नुथ, ततोऽङ्ग-ग्रन्थिसमुदायाद्रोगं तथा निवर्त्तयथ यूयं यथा उग्रो रुद्रस्त्रिशूलमध्यभागेन युगान्ते जगद् बाधते। उद्गूर्णशस्त्रः क्षत्रियः शत्रून् बाधते वा।

 तैत्तिरीयोपनिषदि चान्नस्य महत्त्वं प्रतिपादयन् तदुत्पादने वद्र्धने चैष आदेशो वर्तते श्रुतेः—

"अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः। अन्नं हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमन्नमुच्यते। अन्नं बहु कुर्वीत। तद्व्रतम्।"

कौटिलीयेऽर्थशास्त्रे विद्यासमुद्देशप्रकरणे आन्वीक्षिकी-त्रयी-वार्त्ता-दण्डनीत्यादिचतुर्विद्याव्याख्यावसरे—

"कृषिपशुपाल्ये वाणिज्या च वार्त्ता धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारकी।"

इति लेखेन स्पष्टं वार्त्तायाः कृषिपशुपालनवाणिज्यमूलकं विद्यात्वं व्याख्यातम्। तत्रैव तट्टीकायां महर्षिपराशरेण लिखितं कृषेः, महर्षिशालिहोत्रेण लिखितं पशुपालनस्य, राजर्षिश्रीमिथिलेशेन लिखितं वाणिज्यस्य च पुस्तकमासीदित्युल्लेखः कृतः टीकाकृद्भिः।

एवं कृषेः सहकारिफलानां वृद्धये, उद्यानरोपणं चाधिकृत्याद्यतो बहुपूर्वं प्राचीनभारते श्रीमता महर्षिव्यासेनाग्नेयपुराणे वृक्षायुर्वेदनाम्ना वृक्षारोपणम्, तत्सेचनम्, फलपुष्पसमृद्ध्यर्थं सघनवृक्षाणां शाखाशोधनम्, नानाविधसेकैः सेचनं च प्रतिपादितम्—

वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः।
.... .... .... .... ....
उद्यानं गृहवासे स्यात् तिलान्वाप्यथ पुष्पितान्॥
सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे।
वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः॥
उत्तमा विंशतिर्हस्ता मध्यमा षोडशान्तराः।
स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्॥
विफलाः स्युर्घना वृक्षाः शस्त्रेणादौ हि शोधनम्।
विडङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा॥
फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः। ३१९
घृतशीतपयःसेकः फलपुष्पाय सर्वदा॥

आचार्यवराहमिहिरेणापि वाराहीसंहितायामिममेव विषयमधिकृत्य कथं वृक्षारोपणम्, तत्सेचनम्, फलपुष्पादिसमृद्ध्यर्थं नानाविधसेकैस्तत्सेकश्च कर्तव्य इति प्रतिपादितम्।

अलं पल्लवितेन, संस्कृते सर्वमपि मानवजीवनोपयोगि सुदुर्लभं साहित्यं विद्यते। परं तत्सर्वमिदानीमध्ययनाध्यापनयोर्न प्रचलति। या देववाणी पुरा देशविदेशेषु सर्वत्र प्रसृता निखिलव्यवहारोपयोगिनी हृष्टपुष्टाङ्गा राष्ट्रभाषासीत्, सैवेदानीं सर्वथोपेक्षिता संकुचितकलेवरा जीर्णशीर्णा च दृश्यते। या न केवलं मानवानामपि तु गुणगरिम्णा देवानामपि वाणी देववाणीति नाम्ना ख्यातिं गता, सैव स्वीयप्राचीनोत्कृष्टगुणगौरवपदात् परिपतन्ती शनैः शनैरधोगतिमनुप्राप्तेत्यहो कालस्य प्रभावः। नैतेनासंस्पृष्टा भूमिः क्वापि।

कासुचित्पाठशालास्वध्ययनाध्यापनम्, हिन्दूगृहस्थानां गृहेषु कर्मकाण्डम्, जन्मकुण्डलीनिर्माणं फलादेशकथनं च, यत्र तत्रायुर्वेदेनौषधवितरणं विहाय सर्वत्रैव राजकीयव्यवहारेषु चान्येषु लौकिकव्यवहारेषु पिहितमेव द्वारं संस्कृतज्ञानाम्। साम्प्रतं जनेषु धर्माचरणाभावेन कथावाचनं क्रूरगृहाणां पूजनं मन्त्रजपो यजनं याजनं दानं प्रतिदानं सर्वमपि यथा शनैः शनैरपक्षीयते हिन्दूगृहस्थगृहेषु तथैव संस्कृतपण्डितानां वृत्त्युच्छेदोऽपि जायतेऽमन्थरगत्या। साम्प्रतं दूरमास्तां तेषां सैनापत्यम्, प्रधानामात्यत्वम्, सान्धिविग्रहिकत्वम्, प्राड्विवाकत्वम्, लोकनायकत्वम्। हन्त, सुखेन जीवनयापनमपि सुदुर्लभं प्रतिभाति तेषाम्।

किंच संस्कृतभाषायास्तदध्येतॄणां चावनतेर्मूलकारणं कथं च संस्कृतस्य प्रचारः संस्कृतज्ञानां चाभ्युदय इति साम्प्रतं चिन्तनीयोऽयं विषयः।

यस्या भाषायाः सर्वथा लोकोपयोगिविविधविद्याविकासेन परिपूर्णं साहित्यभण्डारं न तस्याः कोऽपि दोषः। या पुरा स्वतन्त्रे भारते हिन्दूनृपतिकाले राजशक्तिमवलम्ब्य राष्ट्रभाषापदं प्राप्ता, सा साम्प्रतमपि लोकव्यवहारोपयोगिनी भवितुमर्हति। सा केवलं राजशक्तेरवलम्बनं विविधजीविकाक्षेत्रेषु संस्कृतज्ञानां हस्तावलम्बनं चापेक्षते।

हर्षातिरेकस्यायं विषयो यदद्य ह्यस्माकमुत्तरप्रदेशस्य लोकप्रियं राज्यं सुरभारतीसमुपासकानां चिन्तनीयामवस्थां समुद्धर्तुं प्रयतमानं दृश्यते। स्वातन्त्र्यप्राप्त्यनन्तरमुत्तरप्रदेशस्य
 शिक्षाकार्यसंचालनं विविधविद्यापारङ्गतानां श्रीमतां डाक्टरसम्पूर्णानन्दमहोदयानां हस्ते समायातम्। ते हि काशीस्थाः संस्कृतस्य विद्वांसः संस्कृतज्ञेषु लब्धादराश्च सन्ति। तेषा-

मविरतप्रयत्नेन काशिकराजकीयसंस्कृतमहाविद्यालयोऽचिरादेव विश्वविद्यालयो भवितेति भवतां विदितमेव। अस्य महाविद्यालयस्याङ्गभूतैका वेधशालापि भविष्यति। यस्याः कृते आवश्यकं यन्त्रादिकं विदेशेभ्य इदानीं समानीतं वर्तते। प्रथितयशोभिरस्माकं शिक्षामन्त्रिमहोदयैः संस्कृतपरीक्षाणां मानदण्डमुत्थापयितुं लौकिकविषयाणां प्रथमामध्यमाशास्त्रिपरीक्षासु समावेशः कृतो वर्तते। येनेदानीं प्रथमा-पूर्वोत्तरमध्यमा-शास्त्रिपरीक्षाः 'जूनियरहाईस्कूल-हाईस्कूल-इन्टरमीडियट-बी०ए०'—परीक्षाभिः समानमानाः संवृत्ताः सन्ति।

साम्प्रतमस्माकं देशश्चिरकालीनपारतन्त्र्यानन्तरं वर्षचतुष्टयात्स्वतन्त्रोऽस्ति। अद्य कथं प्राप्तस्वातन्त्र्यस्य रक्षणं देशस्याभ्युदयश्च भवेदिति यत्रेमे बहवः प्रश्नाः सन्ति, तत्रैव कथमस्माकं देशः पुरातनं गौरवं लभेत, 'सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः' इति सुखशान्तिपुरस्सरं विश्वजनीनं सन्देशं प्रसारयन् पुनर्जगद्गुरुत्वं च प्राप्नुयादिति प्रश्नोऽपि जागर्ति। अस्माकं भारतीया संस्कृतिस्तन्मूलभूतं संस्कृतवाङ्मयं चास्माकं पराधीनावस्थायामपि सर्वत्रान्ताराष्ट्रीयं गौरवं ररक्षतुः। ताभ्यामेवेदानीमपि स्वतन्त्रभारतस्य भालं गौरवेण पुनरपि समुन्नतं भविष्यतीति नात्र विवादः। अतो भारतीयसंस्कृतेस्तदाधारभूतस्य च संस्कृतवाङ्मयस्य संरक्षणं प्रचारातिशयश्च यथा भवेत्तथा कर्तव्यमस्माभिः।

सम्प्रति संस्कृतपाठशालाभ्यो राजकीयसाहाय्यरूपेण यावद् द्रव्यं मिलति तेन कथं कथमपि तत्र प्राणसंचरणं भवति। विशालेऽस्मिन् प्रान्ते यावत्संख्याकाः पाठशालाः सन्ति तदपेक्षया प्राप्तराजकीयसाहाय्यद्रव्यपरिमाणं न्यूनातिन्यूनं वर्तते। यावद्विद्यालयेभ्यो दीयते राजकीयसाहाय्यं ततोऽपि चतुर्गुणा विद्यालया एतादृशाः सन्ति यत्र न किमपि साहाय्यं दीयते। एतेन स्वल्पसाहाय्येन साम्प्रतं संस्कृताध्यापकानां सम्यग्जीवनयात्रानिर्वाहः, विद्यालयभवननिर्माणसंरक्षणे, छात्राणां च साहाय्यं न कर्तुं पार्यते। किं बहुना, सम्प्रति महार्घतायां राजकीयकार्यालयेषु क्षुद्रतमेभ्यः सेवकेभ्योऽपि यावद्दीयते ततोऽपि न्यूनं संस्कृताध्यापकानां वेतनमिति सर्वथा शोचनीया दशा तेषाम्। कथं वराकास्ते स्वस्य स्वपरिवारस्य च संरक्षणं कुर्वन्ति साम्प्रतमिति त एव जानन्ति तत्पार्श्ववर्तिनश्च। अतः संस्कृतज्ञानां जीवननिर्वहणक्षेत्रं यथा विस्तृतं भवेत्, संस्कृतपाठशालानां तदध्यापकानां च वर्त्तमानदशासु यथा सुधारो भवेत्तथा प्रयतितव्यं शासनाधिकारिभिरिति निवेद्य विरम्यते।

---

# वाल्मीकीयादिकाण्डरहस्यम्

श्रीरामाज्ञापाण्डेयः

( ६२ पृष्ठतोऽनुवृत्तम् )

अथ तौ रजनीं तत्र मुनिभिः सहोषतुः प्रतिपूजितौ च। प्रभाते कृताह्निकक्रियौ विश्वामित्रमन्यांश्च मुनीनभिवाद्य किङ्करावुपस्थिताविति चाभाषेताम्। जनकस्य यज्ञो भविष्यति तत्र वयं यास्यामः। भवद्भ्यां चास्माभिः सह गन्तव्यम्। सवासवैर्देवैरन्यैश्च सयक्षोरगराक्षसैरसमापूरितं धनुस्तत्र द्रक्ष्यसि त्वमिति चावादिषुस्ते रामम्। विश्वामित्रो भगवान् वनदेवता आमन्त्र्य मिथिलां यियासुरुत्तरं जाह्नवीतीरमभिलक्ष्य सिद्धाश्रमं[1] प्रदक्षिणीकृत्योत्तरां दिशमास्थाय पन्थानमुपचक्रमे। तं यान्तं ब्रह्मरथानां शतं संभृत्य भाण्डानि समारोप्य ते सुदूरं गत्वा लम्बमाने दिवाकरे शोणतीरे हुतहुताशना वासमचीक्लृपन्। दिनकरे चास्तं गते सर्वे मुनयो विश्वामित्रं पुरस्कृत्योपविविशुः। रामेण तद्देशस्य स्थितिं पृष्टः कौशिकः सोपोद्घातमुवाच।

ब्रह्मपुत्रः कुशः कुशाम्बं कुशनाभम् अमूर्त्तरजसं वसुं चेति चतुरः सुतान् जनयामास।

---

१ सिद्धाश्रमस्य पूर्वोक्तेन विवरणेन ज्ञायते यत्स पर्वतसमीप एव भवेत्। बक्सरप्रान्तश्च नहि पर्वतसमीपेऽस्ति, अतस्तस्य सिद्धाश्रमत्वं नैव युक्तिसङ्गतम्, पद्मपुराण उत्तरखण्डे ( अ० २६९ श्लो० १०४ )—"एतस्मिन्नन्तरे देवि कौशिको लोकविश्रुतः। सिद्धाश्रमे महापुण्ये भागीरथ्यास्तटे शुभे॥" इति पाठो दृश्यते। तेनानुमीयते यत् तदानीं गङ्गा पर्वतसमीपे 'सहसराव' नामकनगरसमीप आसीत्। इदानीं गङ्गा अतिदूरं विद्यते।

केचन तु इदं बक्सरमेव सिद्धाश्रमं कथयन्ति, तत्रैव गङ्गाया विद्यमानत्वात्। परं 'पर्वतस्याविदूरतः' इत्युक्तिरत्र विरुध्यते।

ते च प्रजापालनं कुरुतेति पित्रा समादिष्टाश्चत्वारि पुराण्यावासयामासुः। तेषु [1]कुशाम्बः कौशाम्बीम्, कुशनाभो महोदयम्, अमूर्त्तरजाः प्राग्ज्योतिषं पुरम्, वसुस्तु गिरिव्रजं चक्रे।

सुमागधी नदी चात्र वर्तते यया मगधा विश्रुताः सन्ति। यस्या उभयोः पार्श्वयोः सस्यसम्पन्नानि क्षेत्राणि शोभन्ते। एते च शैलवराः पञ्च राजन्ते। येषां मध्ये मालेवेयं नदी[2] वर्तते।

---

१ कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्। कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६ ॥ अमूर्त्तरजसो नाम धर्मारण्यं महामतिः। चक्रे पुरवरं राजा वसुर्नाम गिरिव्रजम् ॥ ७ ॥ एषा वसुमती नाम वसोस्तस्य महात्मनः। एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥ [ वा० रा० आदि० स० ३२ ]

कौशाम्बी = प्रयागसमीपे पश्चिमायां दिशि वर्तते। महोदयम् = कान्यकुब्जम् ( कन्नौज )। धर्मारण्यम् = ग्यासमीपस्थम्। वसुमती = गिरिव्रजम् ( राजगृहम् )।

गरेसियो-मुद्रिते तु—तेषां कुशाम्बः कौशाम्बीं पुरीमावासयच्छुभाम्। कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ५ ॥ तथाऽमूर्त्तरजा वीरश्चक्रे प्राग्ज्योतिषं पुरम्। धर्मारण्य समीपस्थं वसुश्चक्रे गिरिव्रजम् ॥ ६ ॥ देशोऽयं वसुनामासीद्वसोरमिततेजसः। एते शैलवराः पञ्च प्रकाशन्ते महोच्छ्रयाः ॥ ७ ॥ सुमागधी नदी चात्र मगधा विश्रुता यया। पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ८ ॥ [ वा० रा० आदि० स० ३५ ]

२ इयं च नदी भिन्ना शोणनदात्। नागेशभट्टस्तु ( बालकाण्ड स० ३३ श्लो० २०
टीकायाम् )—"शोणनदस्यैव शोणा इत्यपि नामेत्याहुः। वस्तुतः शोणा इति गिरिव्रजसमीपस्थो
नदीविशेष इत्येतदुत्तरसर्गे स्पष्टम्।" इत्याह। यच्च पञ्चत्रिंशे सर्गे चतुर्थश्लोकव्याख्यायां—'शोणैव
शोण इति व्यपदिष्टः' इत्याद्युक्तं तन्न युक्तिसहम्, प्राचीनपुस्तकेषु शोण इति पाठस्यैव सत्त्वात्;
शोणापाठकल्पने बीजाभावात्। सिद्धाश्रमात् प्रस्थितस्य विश्वामित्रस्य महानदस्य शोणस्य
मध्ये मार्गे सत्ताया गले पातात्तस्य चर्चाया अवश्यकरणीयत्वाच्च। या च सुमागधी नदी सा
तु क्षेत्रसम्पन्नतटा शोणनदाद् भिन्नैव। सैव तत्र शोणनदसञ्ज्ञता भवेत्। नहि तस्याः शोणा ३५३
इति नाम प्राचीनपुस्तकेषु दृश्यते।

रात्रौ पूर्वोक्तप्रकारेण कथां कथयन् विश्वामित्रः कथाप्रसङ्गेन स्ववंशवर्णनमप्यकरोत्। एवं कथां [1]कथयतस्तस्यार्धरात्रोऽभवत् चन्द्रश्चोदैत्। सर्वे च ते तं रात्रिशेषं सुषुपुः। अत्र मध्यरात्रे चन्द्र उदितोऽभवत्। तेन कृष्णाष्टमी तिथिस्तदासीदित्यायाति।

प्रभातायां शर्वर्यां विश्वामित्रेण जागरितो रामः पौर्वाह्णिकीं क्रियां कृत्वा गन्तुं प्रववृते, 'अयं शोणः शुभजलोऽगाधः पुलिनैरभिमण्डितश्चास्ति, कतमेन पथा एनं सन्तरिष्यामः' इति विश्वामित्रमपृच्छच्च। विश्वामित्रस्तं प्रत्युवाच–'गाध एष महाबाहो तरिष्यामो यथासुखम्। अयं पन्था मयोद्दिष्टोऽस्ति येन महर्षयो यान्ति।' ते दूरमध्वानं गत्वा दिवसे समाप्ते जाह्नवीं ददृशुः। तस्यास्तीरे तदावासं चक्रुः। यथाकालं स्नात्वा पितृदेवतर्पणं च कृत्वा अग्निहोत्राणि च हुत्वा हविः प्राश्य जाह्नवीतीरे मुदिता उपाविशन्। गङ्गोत्पत्तिं च पप्रच्छ भगवान् रामचन्द्रः कौशिकम्। विश्वामित्रश्च विस्तरेण तदुत्पत्तिमवर्णयत्।

गङ्गोत्पत्तिप्रसङ्गेन कार्त्तिकेयोत्पत्तिं चाचख्यौ। कार्त्तिकेयोत्पत्तिविषये मया पूर्वमेव सिद्धान्त उक्त इति नास्ति तद्वर्णनस्यावश्यकता। तदा ते रात्रिशेषं गङ्गादक्षिणतटे ऊषुः। ततः[2] प्रभाते कृताह्निकं विश्वामित्रं सत्कृत्य प्रोवाच भगवान् रामचन्द्रः–'रात्रिर्गता श्रोतव्यं च

---

१ स्थितोऽर्धरात्रः काकुत्स्थ कथां कथयतो मम। निद्रां भजस्व भद्रं ते विघ्नाशोऽध्वनोऽस्तु नः॥ निष्पन्दास्तरवः सर्वे संलीना मृगपक्षिणः। नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन॥ सूक्ष्मेणाञ्जनचूर्णेन नभः कृत्स्नमिवाञ्जितम्। ग्रहनक्षत्रताराभिः काञ्चनीभिरिवावृतम्॥ उदेति चासौ शीतांशुर्लोककान्तो निशाकरः। अंशुभिः स्वैर्जगत् सर्वैश्चर्मार्तं ह्लादयन्निव॥ ते रात्रिशेषं सुषुपुः शोणतीरे महर्षयः। प्रभातायां च शर्वर्यां विश्वामित्रोऽभ्यभाषत॥ [वा० रा० आदि० स० ३६]

२ ततः प्रभाते विमले विश्वामित्रं महामुनिम्। उवाच रामः सत्कृत्य कृताह्निकमिदं वचः॥ ५॥ गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम्। संतरामः सरिच्छ्रेष्ठां पुण्यां त्रिपथगां नदीम्॥ ६॥ इहेयं नौः सुविस्तीर्णा संतारयितुमापगाम्। भवन्तमिह सम्प्राप्तं दृष्ट्वेति मतिर्मम॥ ७॥ इत्येतद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः। संतारं कारयामास विश्वामित्रो महामुनिः॥ ८॥ उत्तरं तीरमासाद्य ततः स मुनिपुङ्गवः। अपश्यत् तत्र निरतांस्तापसान् नियतव्रतान्॥ ९॥ स तान् सम्पूज्य विधिवज्जगाम सह राघवः। विशालस्य पुरीं रम्यां दिव्यां स्वर्गपुरीमिव॥ १०॥ [वा० रा० आदि० स० ४६]

श्रुतम्। भवन्तं संप्राप्तं श्रुत्वा इयं दृढा नौः समुपस्थितेति तर्कयामि।' रामोक्तिं निशम्य विश्वामित्रः संतारं कारयामास। उत्तरं तीरमासाद्य तत्रत्यांस्तापसान् दृष्ट्वा तांश्च सत्कृत्य रामो विशालस्य राज्ञो वंशमपृच्छत्। विश्वामित्रस्तं वंशं कथयितुमारेभे।

अयं स देशो वर्तते यत्र समुद्रमथनोद्भूता अप्सरस उदभवन्। ताश्च न दैत्या नापि आदितेया जगृहुः। अतस्ताः सर्वसाधारणाः संजाताः। ततश्च[1] वरुणात्मजा सुरा समुत्पन्ना। तामनिन्दितां देवा जगृहुः। अतः सुरापरिग्रहाद् देवाः सुराः संजाताः, अपरिग्रहाच्च दैतेया असुराः सम्पन्नाः। ततोऽमृतमुत्पन्नम्, तदर्थं द्वयोर्महान् संमर्दः संजातः। तस्मिन् युद्धे देवा दैत्यान् विजिग्यिरे। अत्रैव च दितिः परमदुःखिता तपश्चचार। अतो हि गङ्गाया दक्षिणे कूले देवानाम्, उत्तरे च दैत्यानां निवास इत्यायाति।

अत्रैव विशालकुलोत्पन्नः साम्प्रतं [2]प्रमतिर्नाम एष राजा इमां पुरीं परिपालयति। इहाद्य रजनीं वसामः। श्वश्च जनकं द्रष्टुमर्हसि।

कुशलप्रश्नं परस्परं पृष्ट्वा कथान्ते प्रमतिर्विश्वामित्रमभाषत--'इमौ कस्य कुमारौ किमर्थं च त्वया सह भ्राम्यतः।' विश्वामित्रः सर्वं कथाजातमवर्णयत्। विश्वामित्रवचः श्रुत्वा भृशं विस्मितः प्रमतिर्दशरथसुतौ तावतिथी पूजयामास। [3]तदनन्तरं ते तां निशां तत्रैव निन्यिरे, प्रातश्च मिथिलां गन्तुं प्रववृतिरे।

---

१ वरुणस्य ततः कन्या वारुणी रघुनन्दन। उत्पपात रसात्तस्मान्मार्गमाणा परिग्रहम् ॥ २६ ॥ दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम्। अदितेस्तु सुताः प्रीतास्तामगृह्णन्त वै तदा ॥ २७ ॥ सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताः। अपरिग्रहणात्तस्या दैतेयाश्चासुराः स्मृताः ॥ २८ ॥ [ वा० रा० आदि० स० ४६ ]

२ तस्य पुत्रोऽथ काकुत्स्थ पालयेता साम्प्रतं पुरीम्। धर्मात्मा नरशार्दूल प्रमतिर्नाम वीर्यवान् ॥१९॥ इहाद्य रजनीं राम सुखं वत्स्यामहे वयम्। श्वः प्रभाते तु जनकं ध्रुवं द्रक्ष्यसि राघव ॥ २१ ॥ [ वा० रा० आदि० स० ४८ ]

३ ततः परमसत्कारं प्रमतेः प्राप्य राघवौ। उषित्वा च निशां तत्र जग्मतुर्मिथिलां प्रति ॥ ९ ॥ मिथिलोपवने तस्मिन्नाश्रमं प्रेक्ष्य राघवः। पप्रच्छ नरशार्दूलं किमिदं निर्जनं वनम् ॥ ११ ॥ [ वा० रा० आदि० स० ४९ ]

तत्रोपस्थाय चं मिथिलोपवने गौतमाश्रमे अहल्यां शापोन्मुक्तां विदधे रामचन्द्रः। अहल्या च शापोन्मुक्ता रामचन्द्रं प्रत्यपूजयत्। गौतमो दिव्यदृष्ट्या सर्वं बुद्ध्वा तत्रागत्य राममपूपुजत्। पूजामवाप्य[1] विश्वामित्रं पुरस्कृत्य रामः प्रागुत्तरां दिशं गत्वा जनकस्य यज्ञवाटं ददर्श। तत्र हि समागतानां तत्तद्देशभाषासु निष्णातानां विप्राणामावासाः परिकल्पिता आसन्। रामश्च जनकस्य यज्ञसमृद्धिं दृष्ट्वा परमं हर्षमवाप। 'अहो समृद्धिर्जनकस्य, नानादेशनिवासिनां देशभाषाधिकारिणां ब्राह्मणानां ब्रह्मरथा आवासा विद्यन्ते। दृश्यो देशः परीक्ष्यतां यत्र वयं वत्स्यामः।' एवं रामवचः श्रुत्वा महामना विश्वामित्रो विविक्ते सलिलप्लुते देशे निवेशमकरोत्। जनको विश्वामित्रमृषिमायान्तं श्रुत्वा शतानन्दं पुरस्कृत्यार्घ्यपाद्यादिभिस्तमपूजयत्। विश्वामित्रमासने उपवेश्य कृताञ्जलिरभाषत [2] 'भगवन्, अद्य मम यज्ञसमृद्धिर्दैवतैः सफला कृता, यज्ञस्यावभृथं भवान् द्रष्टा। द्वादशाहं शेषं यज्ञस्य द्विजातयः कथयन्ति। तत्र भागार्थिनो देवान् द्रक्ष्यसि त्वम्। एतान्यहानि सुसुखं वस। एतौ महात्मानौ च पावकी कुमाराविव कस्य, किमर्थं चागतौ।' विश्वामित्रश्च रामस्येतिवृत्तं सर्वं जनकाय प्रोवाच, अहल्योद्धारादिकं चावर्णयत्।

शतानन्दश्च सर्वं विश्वामित्रस्य चरितं प्रोवाच। कामधेन्वर्थं वसिष्ठेन सह विवादम्, तस्मात् पराजयम्, पुनरपि शङ्करारांधनेनास्त्रग्रामप्राप्तिम्, पुनर्वसिष्ठेन युद्धे पराजयम्, पुनर्ब्राह्मण्यप्राप्तये महिष्या सह तपश्चरणम्, तत्र चतुर्णां पुत्राणां जन्म, ब्रह्मकर्तृकं राजर्षिपदप्रदानम्, पुनरपि तपश्चरणम्, तदा ऋषिपदप्रदानम्; पुनरपि तपश्चर्यया महर्षित्वोद्घोषं ब्रह्मकर्तृकम्, पुनरपि घोरया तपश्चर्यया ब्रह्मर्षित्वप्राप्तिं चावर्णयत्।

एतत्सर्वं श्रुत्वा जनकः प्रोवाच—'भगवन्, कर्मकालोऽयमागतः। साम्प्रतं रविमण्डलं

---

१ ततः प्रागुत्तरां गत्वा दिशं रामः सलक्ष्मणः। विश्वामित्रं पुरस्कृत्य यज्ञवाटं ददर्श ह ॥ १ ॥ बहूनीह सहस्राणि नानादेशनिवासिनाम्। समागतानां विप्राणां देशभाषाधिकारिणाम् ॥ ३ ॥ दृश्यन्ते ब्राह्मणानां च वासा ब्रह्मरथाः कृताः। [ वा० रा० आदि० स० ५१ ]

२ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महामुने। यज्ञस्यावभृथं पुण्यं द्रष्टासि सपदानुगः ॥ १४ ॥ द्वादशाहं च शेषं मे यज्ञस्याहुर्द्विजातयः। ततो भागार्थिनो देवानिह द्रक्ष्यस्युपागतान् ॥ १५ ॥ [ वा० रा० आदि० स० ५१ ]

लम्बमानं वर्तते। श्वो भवन्तं द्रष्टास्मि।' तस्यां रात्रौ मनोनीते स्वाश्रमे ते न्यवसन्। प्रातर्जनक आगत्य-'भगवन्, किङ्करोऽयमुपस्थितः, यद् युक्तं तदादिश।'

विश्वामित्रश्च रामाय धनुर्दर्शयितुमादिदेश। जनकश्च-'रामाय लक्ष्मणाय च तद् धनुर्दर्शयामि, यस्य तोलने नाद्यावधि कोऽपि समर्थोऽभवत्। यदि रामो धनुष आरोपणं कुर्यात्तदा अयोनिजां कन्यां सीतामस्मै दास्यामि।' जनकश्च [1]अष्टचक्रस्थां गुर्वीमायसीं मञ्जूषाम्-यत्र तद् धनुर्निहितमासीत्-अष्टभिः शतैः समर्थपुरुषैरानाय्य रामाय दर्शयामास; उवाच च-'नैवैतद् धनुरिन्द्रादयोऽपि समारोपयितुं शक्ता विहायैकमुमापतिम्। भगवन्नेतद् धनुरानीतं मया त्वं रामाय दर्शय।' विश्वामित्रश्च प्रहृष्टेनान्तरात्मना-'गृहाणेदं धनुः, अस्य धारणे कर्षणे च यत्नमातिष्ठ' इत्युवाच। रामश्च-'मञ्जूषां तामुद्घाट्य, इदं धनुः पाणिना तोलयिष्यामि; सज्यस्यास्य विकर्षणे यत्नवांश्च भविष्यामि' इत्यवोचत्। राजा मुनिश्च बाढमित्यभाषेताम्।

समन्ततः पश्यतां सदस्यानां सलीलमिवैकपाणिना तोलयित्वा हसन्निव सज्यं चक्रे। अनायासेन सज्यं कृत्वा पूरयामास, पूरयन्नेव मध्ये बलादिव बभञ्ज च।

विश्वामित्रं [2] राजानं जनकं तौ राघवौ च वर्जयित्वा सर्वे मोहिता धरणीतले

---

१ पुरुषाणां शतान्यष्टौ व्यायतानां महौजसाम्। मञ्जूषामष्टचक्रस्थां गुर्वीमूहुः कथंचन ॥ ४ ॥ मुनेस्तु वचनाद्रामो यत्र तिष्ठति तद्धनुः। मञ्जूषां तामपावृत्य विश्वामित्रमभाषत ॥१४॥ इदं धनुरहं दिव्यं तोलयित्वैकपाणिना। यत्नवांश्च भविष्यामि सज्यस्यास्य विकर्षणे ॥१५॥ बाढमित्येव तं राजा मुनिश्च समभाषत। सलीलमिव तद्रामस्तोलयित्वैकपाणिना ॥ १६ ॥ पश्यतामभितस्तत्र सदस्यानां समन्ततः। आनम्य नातियत्नेन सज्यं चक्रे हसन्निव ॥ १७ ॥ सज्यं कृत्वा ततश्चैव पूरयामास वीर्यवान्। बभञ्ज पूरयंश्चैव मध्ये रामो बलादिव ॥ १८ ॥

निर्णयसागरमुद्रितपुस्तके तु—"नृणां शतानि पञ्चाशद् व्यायतानां महात्मनाम्। मञ्जूषामष्टचक्रां तां ते समूहुः कथंचन ॥ ४ ॥" इति पाठः। 'शतानि पञ्चाशत् पञ्चसहस्राणीत्यर्थः' इति टीका। [ वा० रा० आदि० स० ६७ ]

२ निपेतुस्तेन शब्देन सर्वशो मोहिता जनाः। विश्वामित्रं वर्जयित्वा राजानं तौ च राघवौ ॥ २० ॥ भवतोऽनुमते तस्मादितो यान्तु महामुने। दूता ममाज्ञया शीघ्रमयोध्यां जवनैर्हयैः ॥ २१ ॥ [ वा० रा० आदि० स० ६९ ]

निपेतुः। जनकश्च प्राञ्जलिर्विश्वामित्रम्–'श्रुतपूर्वो मे रामो दशरथात्मजः। अत्यद्भुतं कर्म मयाऽदर्शि, तं रामं भर्तारमासाद्य सीता जनकानां कुले कीर्तिमाहरिष्यति। प्राणेभ्योऽपि प्रियां सीतां रामाय दास्यामि। वेगवद्भिर्हयैर्दूता अद्यैवायोध्यां यान्तु। राजानं विज्ञाप्यानयन्तु च' इति प्रोवाच।

जनकेन [1] समादिष्टा दूतास्त्रिरात्रं मार्गे उषिताश्चतुर्थेऽहन्ययोध्यां प्राविशन्। तस्यां रात्रौ दूतानावास्य प्रातः सर्वान् जनकपुरीं [2] गन्तुमादिदेश। सबलवाहनो राजा दशरथश्चतुर्भिरहोरात्रैर्मिथिलां प्राप।

जनकश्च प्रियातिथिमुपागतं प्रोवाच–'भगवन्, युष्माकं दर्शनेन वयं पवित्रीकृताः। श्वः प्रभाते यज्ञस्यावभृथे पुण्यमुद्वाहं निर्वर्तयितुमर्हसि' इति। 'राजन्, प्रतिग्रहीतारो दातृवशा भवन्ति। यदा यद् वक्ष्यसि तदा तत्कर्तारो वयम्' इति राजा दशरथोऽवादीत्। एतद्वचः श्रुत्वा जनकः परं विस्मयमागतः। यतो हि वरपक्षीया अपरेऽपि कन्यापक्षीयान् तृणायापि न मन्यन्ते। इति दशरथस्य तादृशं वचनं श्रुतवतो जनकस्य परो विस्मयोऽभवत्।

ततो राजा दशरथो विश्वामित्रं दृष्ट्वैव ववन्दे, 'भवतो दर्शनेन पूतोऽस्मि' इत्यादि चोवाच। 'त्वं स्वकृतैः कर्मभिः पूतोऽसि, अनेन रामेण पुत्रेण पुनरपि पूततरोऽसि' इति विश्वामित्रस्तं दशरथं प्रत्युवाच।

---

१ जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः। मार्गे त्रिरात्रमुषित्वा अयोध्यां प्राविशन् पुरीम् ॥ १ ॥ ते चापि रजनीं तत्र दूताः परमसत्कृताः। ऊषुर्विदेहराजस्य सर्वकामैः प्रपूजिताः ॥ २० ॥ [ वा० रा० आदि० स० ७० ]

२ तस्यां रात्र्यां व्यतीतायां सोपाध्यायो नराधिपः। राजा दशरथः श्रीमान् सुमन्त्रमिदमब्रवीत् ॥ १ ॥ इत्याज्ञया नरेन्द्रस्य सेना सा चतुरङ्गिणी ॥ राजानमृषिभिः सार्धं प्रयान्तं पृष्ठतोऽन्वगात् ॥ ६ ॥ चतुर्भिस्तानहोरात्रैर्विदेहानभ्युपेयिवान्। ददर्श मिथिलां रम्यां जनकेनोपशोभिताम् ॥ ७ ॥ श्वः प्रभाते महाराज निर्वर्तयितुमर्हसि। यज्ञस्यावभृथे पुण्यमुद्वाहमृषिभिः सह ॥१४॥ उवास स निशां तत्र सुसुखी हृष्टमानसः ॥२५॥ [ वा० रा० आदि० स० ७१ ]

सर्वे च ते तां रात्रिं सुसुखं न्यवसन्। प्रभाते[1] जनकः शतानन्दम्-'मम भ्राता चयाट्टालकपर्यन्तं साङ्काश्यमधितिष्ठति। तं चेहानय' इत्याह। कुशध्वजश्चैकेनाह्ना तत्रानीतः।

1 ततः प्रभाते जनकः कृतपौर्वाह्णिकक्रियः। उवाच मधुरं वाक्यं शतानन्दं पुरोधसम्॥ १॥ भ्राता ममानुजः श्रीमान् वीर्यवानाज्ञया मम। कुशध्वज इति ख्यातो योऽध्यास्ते नगरं शुभम्॥ २॥ चयाट्टालकपर्यन्तं पिबन्निक्षुमतीं नदीम्। सांकाश्यं स्वर्गसंकाशं विमानमिव पुष्पकम्॥ ३॥ [ वा० रा० आदि० स० ७२-गरेसियो-सं० ]

'विमानमिव पुष्पकम्' इत्यनेन सांकाश्यं नगरमुपमीयते। सांकाश्यनगरं तु फरुखाबादप्रान्ते वर्तते। तत एकेन दिनेन कथं कुशध्वज आनीत इति शङ्कोदेति। परं सांकाश्यस्य पुष्पकविमानेनोपमितत्वाद् यथा पुष्पकमेकेनाह्ना लङ्कातोऽयोध्यामायातम्, तद्वत् तादृशविमानेन कुशध्वज एकेन दिवसेन मिथिलामागत इत्यत्र न काचिद् बाधा प्रतीयते।

यत्तु कुशध्वजो यज्ञवाट एवासीद् यज्ञरक्षार्थं तन्न सम्यक्, तत्र स्थितस्य कुशध्वजस्यानयने शीघ्रवाजिनोऽनपेक्षणात्। इक्षुमती नदी फरुखाबादप्रान्ते वर्तते, या साम्प्रतं कालीनदीत्युच्यते। इक्षुमतीनदीमूलक एव गौडदेशोऽभवत्। तत्रस्था गौडा वङ्गदेश आगत्य वङ्गस्यैकदेशं गौडपदेन व्यवाहार्षुः।

"शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः। समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा॥ ६॥ सांकाश्यां ते समागम्य ददृशुश्च कुशध्वजम्। न्यवेदयन् यथावृत्तं जनकस्य च चिन्तितम्॥७॥ तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाजवैः। आज्ञया तु नरेन्द्रस्य आजगाम कुशध्वजः॥८॥" इति पाठे शीघ्रवाजिनां प्रेषणस्य स्पष्टं प्रतीतेर्दूरे सांकाश्यास्थितिर्निर्विवादा। यत्त्वत्र 'वार्याफलकपर्यन्ताम्' इति पाठं मत्वा नागेशभट्टेन-'वार्यः प्राकारः, तद्युक्ता आफलका यन्त्रफलकास्तद्युक्तः पर्यन्तो यस्याः सा, तथाभूताम्' इत्यादि व्याख्यातम्। तन्न युक्तम्, आफलकस्य यन्त्रविशेषवाचकत्वानुपलम्भात्। एतादृशमशुद्धं पाठं दृष्ट्वा महता पाण्डित्येन तथा व्याख्यातत्वात्।

वस्तुतस्तु 'चयाट्टालकपर्यन्तम्' इति सांकाश्यनगरविशेषणम्। चयः प्राकारः, अट्टालकाश्च पर्यन्तेषु यस्य तदित्ययमेवार्थः। पाठश्चैष समीचीनः। लेखकप्रमादात् प्राचीनचकारवकारयोरीषद्भेदस्य सत्त्वात् चयस्थाने 'वय' इति पठित्वा संशोध्य 'वार्या' इति पाठं प्रकल्प्य ट्टालकेत्यत्र 'ट्टा' स्थाने 'फ' इति पठित्वा तथा पाठकल्पनमेव बुद्धावायाति। एतादृशः पाठभेदो बहुषु स्थलेषु दृश्यत इति तादृशी व्याख्या न युक्तेति मे प्रतिभाति। ३५९

तदानीं दशरथमानेतुमुपकार्यायां मन्त्रिश्रेष्ठः सुदामा प्रेषितः। दशरथश्च मन्त्रिवर्यवचः श्रुत्वा सर्षिगणः सबन्धुश्च तत्रागमत्। वशिष्ठश्च दशरथस्य वंशं ब्रह्माणमारभ्य दशरथपर्यन्तमवर्णयत्। जनकस्तु स्ववंशं स्वयमेवोच्चचार।

रामाय अयोनिजां सीतां लक्ष्मणाय औरसीं सुतामूर्मिलां दास्यामि। राजन्, पितृश्राद्धं रामलक्ष्मणयोर्गोदानमङ्गलं च कुरु। अद्य मघा वर्तन्ते, उत्तरे दिवसे फल्गुन्यो भविष्यन्ति; तत्र विवाहोऽस्तु।

एवमुक्तवति जनके वशिष्ठसहितो विश्वामित्र उवाच। उभे अपि कुले समुद्रसदृशे। युवयोरपत्यसम्बन्धः सदृशोऽस्ति। परमत्र[1] किञ्चिदस्माभिर्वक्तव्यम्, पुनरपि तद् राजन् शृणु। योऽयं राजा कुशध्वजस्तव भ्रातास्ति, तस्य द्वे कन्ये रूपेणाप्रतिमे स्तः। भरतस्य शत्रुघ्नस्य च कृते वयं वरयामहे। यदि ते रोचते तर्हि सम्प्रयच्छेति। एवमुदारं वचो विश्वामित्रवशिष्ठयोः श्रुत्वा जनकः—'एवं भवतु, इमे कन्ये द्वाभ्यामहं दास्यामि। एकाह्नेन चतसृणां राजपुत्रीणां पाणींश्चत्वारो राजपुत्रा गृह्णन्तु। उत्तरे दिवसे[2]

---

१ वक्तव्यमस्ति नः किञ्चिद् भूयोऽपि शृणु तन्नृप। भ्राता ते सदृशो योऽयं शूरो राजा कुशध्वजः॥ ४॥ अस्यास्ति किल धर्मात्मन् रूपेणाप्रतिमं भुवि। कन्याद्वयं राघवार्थे तद्वयं वरयामहे॥ ५॥ धर्मतो भरतस्यार्थे शत्रुघ्नस्य च धीमतः। तदिमे सम्प्रयच्छ त्वं यदि ते रुचिता वयम्॥ ६॥ [ वा० रा० आदि स० ७४ गरेसियो-सं० ]

२ उत्तरे दिवसे ब्रह्मन् फल्गुन्यो भगदेवताः। विवाहेषु प्रशंसन्ति नक्षत्रं वै विपश्चितः॥ १४॥ [ वा० रा० आदि० स० ७४ गरेसियो-सं० ]

कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा रोहिणी नक्षत्रं प्रजापतिर्देवता मृगशीर्षं नक्षत्रं सोमो देवताऽऽर्द्रा नक्षत्रं रुद्रो देवता पुनर्वसू नक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताऽऽश्लेषा नक्षत्रं सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनी नक्षत्रमर्यमा देवता फल्गुनी-नक्षत्रं भगो देवता हस्तो नक्षत्रं सविता देवता चित्रा नक्षत्रमिन्द्रो देवता स्वाती नक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देवताऽनूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं

भगदेवते उत्तरे फल्गुन्यौ भवितारौ । तत्र विवाहो भवतु । वशिष्ठश्च

---

पितरो देवताऽषाढा नक्षत्रमापो देवताऽषाढा नक्षत्रं विश्वे देवा देवता श्रोणा नक्षत्रं विष्णुर्देवता श्रविष्ठा नक्षत्रं वसवो देवता शतभिषङ् नक्षत्रमिन्द्रो देवता प्रोष्ठपदा नक्षत्रमज एकपाद्देवता प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता रेवती नक्षत्रं पूषा देवताऽश्वयुजौ नक्षत्रमश्विनौ देवताऽपभरणीर्नक्षत्रं यमो देवता पूर्णापश्चाद्यत्ते देवा अदधुः । [ तैत्तिरीयसंहिता ४।४।१० ]

नक्षत्रेशाः क्रमाद् दस्रयमवह्निपितामहाः । चन्द्रेशादितिजीवाहिपितरो भगसंज्ञिताः ॥ १ ॥ अर्यमार्कत्वाष्ट्रमरुत् शक्राग्नी मित्रचास्रवाः । नैर्ऋत्युदकविश्वेऽजो गोविन्दो वासवोऽम्बुपः ॥ २ ॥ ततोऽजपादहिर्बुध्न्यः पूषा चेति प्रकीर्त्तिताः । [ नारदसंहिता ६।१ ]

तथा च पूर्वोक्तवैदिकोक्तिविरुद्धोऽयं ज्यौतिषनक्षत्रदेवताक्रमः ।

तैत्तिरीयब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके प्रथमानुवाकभाष्ये देवनक्षत्राणि कृत्तिकात आरभ्य विशाखापर्यन्तानि निर्दिष्टानि सन्ति । यमनक्षत्राणि (पितृनक्षत्राणि) अनुराधात आरभ्य भरणीपर्यन्तानि । तथा चैतन्मते पूर्णचन्द्राधिष्ठितान्येव नक्षत्राणि ग्राह्याणि । एवं च कार्त्तिकपूर्णिमानन्तरत एव देवमासारम्भः । तथा च मार्गशीर्षं वत्सराद्यमारभ्य वैशाखपूर्णिमापर्यन्तं देवमासाः । तदनन्तरं कार्त्तिकपर्यन्तं पितृमासा इति मन्तव्यम् ।

एवं च कृत्तिकातो नक्षत्रारम्भात् तत्र दशमस्य पुरोनुवाक्यायाम्—"श्रेष्ठो देवानां भगवो भगासि तत्त्वा विदुः फल्गुनीस्तस्य वित्तात् । अस्मभ्यं क्षत्रमजरं सुवीर्य्यं गोमदश्ववदुपसन्नुदेह ॥" इत्यत्र याज्यायाम्—"भगो ह दाता भग इत् प्रदाता भगो देवीः फल्गुनीराविवेश । भगस्येत्तं प्रसवं गमेम यत्र देवैः सधमादं मदेम ॥" इत्यत्र च दशमस्य फल्गुनीनक्षत्रस्य भग एव देवता । नवमस्य त्वर्यमेति तत्रैव पूर्वस्मिन् ब्राह्मणे संहितायां चोक्तत्वेन नारदसंहितायामन्येषु वा ज्यौतिषग्रन्थेषु भगपदेन पूर्वे फल्गुन्यौ यद् गृहीते तदयुक्तमेवेति बोध्यम् ।

यच्च मिथिलामाहात्म्ये षष्ठेऽध्याये माधवशुक्लपक्षनवम्यां तिथौ मघानक्षत्रयुक्तायां जानक्या जन्म निर्दिष्टमस्ति, तत्तु पद्मपुराणविरुद्धत्वादुपेक्ष्यमेव ।

एवमस्तु[१८] इति प्रत्यभाषत। राजा च निलयं गत्वा श्राद्धं गोदानं च चक्रे। यस्मिन् दिवसे राजा गोदानादिकं चक्रे तस्मिन्नेवाहनि भरतमातुलो युधाजित् प्रत्यदृश्यत। तां रात्रिं स्वालये ते न्यवसन्।

प्रातश्च युक्ते मुहूर्ते कृतकौतुकमङ्गलैः पुत्रैः परिवृतो राजा वशिष्ठं पुरतः कृत्वा-'तव सदः प्राप्ताः स्मः। तव वशे स्थिताः। यत् स्वधर्माभ्युचितं तत् कुरुष्व' इत्युवाच। एवमुक्तो जनकः–'स्वगृहे को विचारः, कस्याज्ञा प्रतिपाल्यते, यथेच्छं प्रविश्यताम्। चतस्रो मम कन्याः कृतकौतुकमङ्गलाः सन्ति, किमर्थं विलम्बसे' इति प्रत्युवाच।

तदा दशरथो वशिष्ठादीन् प्रवेशयामास। ततो जनकः–'इयं सीता मम सुता तव सहधर्मचारिणी, अस्याः पाणिं त्वं गृहाणेति रामम्; ऊर्मिलायास्त्वमिति लक्ष्मणम्, माण्डव्यास्त्वमिति भरतम्, श्रुतकीर्त्यास्त्वमिति च शत्रुघ्नमुवाच। ततश्चत्वारो राजपुत्राश्चतसृणां राजकन्यानां पाणीनगृह्णन्।

पाणिग्रहणानन्तरं यथाविधि सर्वं कृत्यं समाप्य स्वान् स्वान् दारान् पृथक् पृथग् यानमारोप्य ते स्वावासं जग्मुः। रात्रौ च ते तत्र न्यवसन्।

प्रभाते तौ जनकदशरथौ आपृच्छय विश्वामित्र उत्तरं पर्वतं जगाम। दशरथोऽपि स्वपुरं प्रतस्थे।

सम्प्रति वाल्मीकीयरामायणादिकाण्डरहस्यनामको मदीयो लेखः समाप्तिं गतः। तत्र-भवतः पाठकान् साग्रहमनुरुणध्मि–महाशयाः, अयं हि लेखश्चतुर्धा विभक्तोऽस्ति।

एकोंऽशः श्रीमतां शिक्षादिमन्त्रिणां श्रीसम्पूर्णानन्दमहोदयानामभिनन्दनग्रन्थे काशी-नागरीप्रचारिण्या सभया समर्पिते पञ्चपञ्चाशत्तमपृष्ठमारभ्य पञ्चसु पृष्ठेषु मुद्रितोऽस्ति। 'सीता-विवाहकालनिर्णयः' इति शीर्षकोऽयं लेखः।

द्वितीयो भागस्तु 'अनङ्गदेशः' ( बलियामण्डलम् ) इति शिरस्कः सारस्वतसुषमायाः पञ्चमवर्षे द्वितीयाङ्के पञ्चपञ्चाशत्तमपृष्ठमारभ्य दश [illegible] ष्ठेषु प्रकाशितोऽस्ति।

---

१८. स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम्। गोदानादीनि कर्माणि कर्तुं कार्याण्यनन्तरम्॥ २४॥ स गत्वा निलयं राजा कृत्वा श्राद्धं महत्तदा। पुत्राणां प्रियपुत्रः स चक्रे गोदानमुत्तमम्॥ २७॥ [वा० रा० आदि० स० ७४ गरेसियो-सं०]

तृतीयोंऽशस्तु तस्या एव पत्रिकायाः पञ्चमवर्षीयतृतीयाङ्केऽशीतितमपृष्ठमारभ्य सप्तसु पृष्ठेषु समापितः। अस्मिँल्लेखे रहस्यस्य निर्गलितोऽर्थः सूत्ररूपेण निर्दिष्टोऽस्ति।

अयं हि चतुर्थोंऽशः समुपस्थाप्यते मया। सर्वानपि लेखानेकत्र संकलय्य यदि नाम पाठकाः पठेयुस्तत्रत्यं दूषणं भूषणं वा सूचयेयुस्तर्हि तेषां चिरं कृतज्ञोऽहं स्यामिति। पादव्यवस्थया व्यवस्थितानामृचां रामायणापेक्षयाऽर्वाचीनत्वम्, कुमारसम्भवस्य रघुवंशकर्तृ-कालिदासकर्तृकत्वाभावसमर्थनम्, अनङ्गदेशस्य (बलियामण्डलस्य) काश्यपेक्षयाऽपि पुण्य-तरत्वप्रतिपादनमित्यादयो विषया अवश्यं समालोचनार्हाः।

---

# अष्टाध्यायीप्रकरणक्रमालोचनम्

श्रीरामशङ्करभट्टाचार्यः

( २२८ पृष्ठतोऽनुवृत्तम् )

## तृतीयोऽध्यायः

तृतीयाध्यायाद् व्याकरणस्यास्य द्वितीयो भाग आरभ्यते । इतः प्राक् पदानि संकलितानि, तेषां वैशिष्ट्यमपि प्रदर्शितम् । वाक्यात् पदानां प्रविभागात्मकोऽयं विभागो न सर्वथा काल्पनिकः, कस्मात् ? पदवाक्ययोः पदभेदानां च पृथग् बोधस्यापामरप्रसिद्धत्वात् । परन्तु अत्र यः प्रकृतिप्रत्ययविभागः, [1]स तु सर्वथा शास्त्रमात्रगम्यः । स्मरन्ति हि वैयाकरणाः प्रकृतिप्रत्ययादीनां शास्त्रकृतां कल्पनीयत्वम्[2] ।

तत्रास्मिन् द्वितीये भागे आदौ ( तृतीयाध्याये ) धातुभिर्नामव्युत्पादनम्, ततश्चतुर्थ-पञ्चमाध्याययोर्नामभिर्नामव्युत्पादनमित्येव क्रमः । कारणात् कार्यं प्रवर्तत इति न्यायानुसारेण स क्रमो युक्त एव ।

धातवः सर्वशब्दमूलानि । ते च स्वाभाविकाः कृत्रिमाश्च सन्ति । 'सनाद्यन्ता धातवः' ( ३।१।३२ ) इति सूत्रसिद्धा धातवः कृत्रिमाः, ते च कृत्प्रत्ययप्रदर्शनात् प्राक्प्रदर्शिताः, कृत्प्रत्ययप्रकृतित्वात् तेषाम् । एते सनादयः प्रत्यया धात्वंशभूतप्रत्यया इत्युच्यन्ते । एतेषां विवरणम् ३-१-३१ सूत्रे समाप्तम् ।

---

१ 'पदनिमित्तात् प्रत्ययविधेः' ( ३।१।९२ टीका ) इत्युक्तं कैयटेन । अतः प्राक् प्रत्यय-विधानात् पदविचारात्मकौ प्रथमद्वितीयाध्यायौ आचरितौ वेदितव्यौ ।



२ यथोक्तं दीक्षितेन—'प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च सर्वः कल्पित एव' ( १।२।४५ प्रौढमनोरमा ) ।

एतदनन्तरं विकरणविचार आरब्धः। द्वये च विकरणाः—आर्धधातुकविकरणाः स्यसिजादयः, सार्वधातुकविकरणाः शबादयः। आदौ आर्धधातुकविकरणास्ततः सार्वधातुकविकरणाः। गणभेदे सत्यपि आर्धधातुकविकरणानां नियतत्वादादौ तेषामुपन्यासः, ततोऽनियतानां सार्वधातुकविकरणानाम्। अस्ति च प्रयोजनीयतैतेषां विकरणानां कृत्प्रत्ययार्थमतस्तेषामुपन्यासोऽत्र युक्तः। स्यादयोऽन्तरङ्गाः, सार्वधातुकविकरणास्तु बहिरङ्गाः (द्रष्टव्यतां भाष्यम् ३।१।३३)। अस्मादपि हेतोरादौ स्यादीनां ततः शबादीनामुपन्यासः कृत इत्यपि कथयितुं शक्यते।

'कर्मवत्कर्मणा तुल्यक्रियः' (३।१।८७) इति सूत्रमत्र किमर्थं पठितमिति? उच्यते, अत्र यक्चिण्चिण्वद्भावानामावश्यकता विद्यते, ते च प्राक्तनेषु सूत्रेषु कथिताः, अतः कार्यसादृश्यादत्रैव कर्मकर्तृवाच्यप्रसङ्ग आरब्धः।

एवं धातुभेदं लकारे परे विकरणांश्च प्रदर्श्य कृत्प्रत्ययमारभत आचार्यः 'धातोः' (३।१।९१) इत्यधिकारसूत्रतः।

कृत्प्रत्ययेषु कृत्यकृद्भेदेन द्वौ विभागौ कृतौ। कृत्यप्रत्ययेषु कालावलम्बी बोधो नावश्यकस्तत्र तु विध्यादिप्रकाराणामेव बोधः प्रबल इति हेतोः कृतः कृत्यानां पृथक्करणं विहितम्[1]। किंच केषांचित् कृतां कृत्यानां च सर्वेषां कालविशेषानवच्छिन्नार्थबोधकत्वस्य तुल्यत्वेऽपि कृत्यसंज्ञकाः प्रत्ययाः सकर्मकाकर्मकप्रकृतिभेदेन क्रियाकारकोभयवाचकाः, कृतस्तु सदैव कारकवाचका एवेति कृतः कृत्येभ्यः पृथक्कृताः। स्वरूपतो लघुत्वादादौ कृत्यास्ततः कृतः। इदं नामविशेषणम्। तदेतत् ३।१।१३२ सूत्रपर्यन्तं गच्छति।

कृत्प्रत्ययेषु आदौ विशेषणपदनिष्पादकाः प्रत्ययाः, ततो विशेष्यपदनिष्पादकाः प्रत्यया इति विभागः। लोके विशेषणबोधानन्तरं विशेष्यबोधदर्शनात्।

---

१ स्वरप्रकरणे लाघवार्थमपि कृत्यसंज्ञकस्य विभागस्यावश्यकताऽस्ति (द्रष्टव्यतां ६।२।१६० सूत्रम्)। किंच कृद्भ्यः कृत्यानां पृथगर्थोऽप्यस्ति (द्रष्टव्यतामेतद्विषयको विचारः ३।४।१४ सूत्रीयायां सुबोधिन्यां टीकायाम्)। 

अथ नामविशेषणभूतानां कृत्प्रत्ययानामारम्भः ३।१।१३३ सूत्रतः। एते कालानुसारेण विभक्ता इति प्रतीयते। अत्रायं न्यायः—कृता द्रव्यमेवाभिधीयते, तच्च द्रव्यं द्वेधा, कारकरूपं क्रियारूपं च। तत्र कारकरूपं पक्ता पक्तः पाचक इत्यादयः। क्रियारूपं पाकः पक्तिः पचनमित्यादयः। तदुक्तं भाष्ये—'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति। तत्र कृत्प्रत्ययेन कारकाभिधानेऽपि प्रकृत्या क्रियाया अभिधानात्, क्रियायाश्च नियमेन कालसापेक्षत्वात् कारकविशेषे विहितानामपि कृत्प्रत्ययानां कालानुसारेण विभाग उपपद्यते। आदौ सार्वकालिकप्रत्ययाः, ततो भूतकालिकाः, ततो वर्तमानकालिकाः, ततश्च भविष्यत्कालिकाः प्रत्यया इत्येव क्रमः[1]। वर्तमानकालात् पूर्वं भूतकालो भवति, वर्तमानात् परश्च भविष्यत्काल इति दर्शनमाश्रित्य भूतवर्तमानभविष्यत्कालद्योतकानां प्रत्ययानां विभजनं कृतम्।

सार्वकालिकप्रत्यये आदौ कर्तरि प्रत्यया ण्वुलादयः, कर्तुः प्राधान्यात्[2]। ततः कारकान्तरेषु, कारकान्तराणां कर्त्रधीनत्वात्। एतत्प्रत्ययनिष्पन्नाः शब्दा नामविशेषणभूताः। भूतकालाधिकारे सिद्धं पदमपि नामविशेषणभूतम्। अत्र भूतभेदद्योतकानां प्रत्ययानामपि संग्रहः कृतः। ततो नामविशेषणनिष्पादका वर्तमानकालद्योतकाः प्रत्ययाः। एवं द्वितीयः पादः समाप्तः। तृतीये पादे आदौ भविष्यत्कालाधिकारः[3]। एवं कालद्योतकाः प्रत्ययाः समाप्ताः।

समाप्ते सति नामविशेषणनिष्पादके प्रत्यये 'भावः' (३।३।१८) इत्यधिक्रियते, कारकार्थकप्रत्ययविधानानन्तरं क्रियार्थकप्रत्ययविधानस्य औचित्यात्; प्रसङ्गेन च लाघवाय भावार्थकप्रत्ययानां कारकार्थकत्वमपि बोधितम्।

अथ ३।३।१३१ सूत्रतो लकारार्थ आरभ्यते। इतः प्राग् लट्लिट्लुडादिलकारा विहिताः, अतस्तेषामर्थोऽपि वाच्य इति कृत्वा लकारार्थप्रकरणमारभ्यते। किञ्च धातोर्द्वये

---

१ उक्तं हि कैयटेन—'भविष्यत्कालेन वर्तमानकालस्य बाधनात्' (३।३।३); अत एव वर्तमानकालानन्तरं भविष्यत्कालानुशासनं सार्थकं भवति।

२ अत्रेदं विज्ञेयम्—कृत्यप्रत्यया ण्वुलादयश्च (प्रथमपादीयाः) न कालान्तर्गताः, अत एव प्रथमे पाद एवोभावुपन्यस्तौ। द्वितीये पादे 'कर्मण्यण्' (३।२।१) इत्यणादयो
 यद्यपि सार्वकालिकाः, तथापि एषूपपदस्यावश्यकताऽस्ति, अत एव पृथक्पादे एषामुपन्यासः कृतः।

३ द्वितीयपादे एव भविष्यदधिकारः कथं न कृत इति चिन्त्यम्।

प्रत्ययाः—कृतस्तिङश्च । तत्र कृत्प्रत्ययविधानानन्तरं तिङ्प्रत्ययविधानमवसरप्राप्तमित्यतोऽपि लकारार्थस्तिङ्प्रत्ययश्च आरभ्येते । एवं तृतीयः पादः समाप्तः ।

चतुर्थपादस्य आदिमेंऽशे धातुसम्बन्धे ये प्रत्ययास्तेषां विवरणं कृतम्[1] । इदं कृत्प्रत्ययस्य परिशिष्टभूतमिति कथयितुं शक्यते ।

ततस्तुमर्थे ये प्रत्ययास्तेषामारम्भः ३।४।६ सूत्रतः । इत आरभ्य भावार्थकप्रत्ययाः कथ्यन्ते । एते प्रत्यया अनिर्दिष्टार्थाः, अत एव स्वार्थे भवन्ति । स्वार्थश्च धातूनां भाव एव । भावोऽयं भावाधिकारविहितभावाद् ( ३।३।१८ ) अत्यन्तं पृथक्, अत एतेषां पृथगुपन्यासः । एते अव्ययकृत इत्युच्यन्ते । उक्तं च भाष्यकृता—'अव्ययकृतो भावे' इति । एतस्मादेव सादृश्यात् क्त्वाणमुल्विवरणमत्रैवारब्धम् ।

सर्वविधेषु कृत्प्रत्ययेषु समाप्तिं गतेषु कृतां तदनुबन्धिनो लस्य चार्थप्रदर्शनमारब्धम् । आदौ प्रत्ययविधानं ततोऽर्थकथनमित्येव क्रमः, शब्दश्रवणानन्तरमेवार्थापेक्षा मनसि प्रजायत इति[2] सर्वलोकसिद्धं दर्शनं सूत्रकृतेहास्थितम् । एतत् ३।४।७६ सूत्रे समाप्तम् ।

अथ ३।४।७७ सूत्रतो लविवरणं ( लादेशः ) [3]प्रारभ्यते । लकारेषु विहितेषु लादेशकथनं तद्विकारकथनं च युक्तमित्येवात्र न्यायः । यद्वा क्रिया सिद्धा वा भावरूपा वा कारकाङ्गरूपा वा समाप्ता, विशेषणभूताः साध्याः क्रिया अपि समाप्ताः । अवशिष्यन्ते च

---

१ 'वर्तमानसामीप्ये वर्तमानवद्वा' ( ३।३।१३१ ) इति सूत्रार्थज्ञानानन्तरमेव 'धातुसम्बन्धे प्रत्ययाः' ( ३।४।१ ) इति सूत्रार्थस्य ज्ञानं सुशकमिति कृत्वैव ३।३।१३१ सूत्रानन्तरं ३।४।१ सूत्रस्योपन्यासः । नन्वेवं सति पृथक्पादकरणस्य किं कारणमिति चेदुच्यते, अधातुप्रत्ययानामपि सम्बन्धे साधुत्वं यथा स्यादित्येतादृशं पूर्वपादविलक्षणं वैशिष्ट्यं स्फोरयितुमेव पृथक्पाद आचरितः ।

२ शब्दप्रधानं व्याकरणमिति कृत्वा पश्चादर्थनिर्देश आचार्येण कृत इत्यपि वचनं युक्तमेव ।

३ अस्मिन् प्रकरणे धात्वधिकारो निवृत्तः, यथोक्तं भाष्यकृता—'प्राक्च लादेशाद् धात्वधिकारः' ( ३।१।९३ ) ।

विशेष्यभूताः साध्याः क्रियाः, अतस्तासामत्रैव प्रकटीकरणमारब्धम्। तत्रापि आदौ टिल्लकाराणां ततो ङिल्लकाराणां विवरणं दृश्यते। टिति धातूनामधिकतरोंऽशोऽविकृतस्तिष्ठति न तु ङितीति कृत्वा आदौ टितस्ततो ङितो विव्रियन्ते।

कृत्प्रत्ययेषु बहूनि प्रकरणानि सन्ति विषयभेदादिति प्राग् दर्शितम्। प्रकरणेन सूत्राणां विभजनं प्राचीनाचार्यसंमतम्, तेन चार्थसिद्धिरपि भवति। दर्शितं खलु प्रकरणसार्थक्यं कैयटेन—'तदेव च वचनं ज्ञापकमत्र प्रकरणे बाध्यबाधकभावाभावस्य' (३।४।१०२ टीका)। अनेन प्रकरणनिर्द्धारणस्यावश्यकता स्फुटीभवति।[1]

## चतुर्थाध्यायः पञ्चमाध्यायश्च

धातोर्नाम्नामुत्पत्तिर्दर्शिता। इदानीं नामतो नाम्नामुत्पत्तिकथनमवशिष्यते। अत इमावध्यायौ प्रारभ्येते। येभ्यः प्रत्यया भविष्यन्ति, आदौ तान् नामग्राहं गृह्णात्याचार्यः 'ङ्याप्प्रातिपदिकात्' (४।१।१) इत्यनेन।

नामभ्यो नाम्नामुत्पत्तिस्तद्धितसंज्ञकेन [2]प्रत्ययेन भवति। स च प्रत्ययो यथा नामसामान्याद् भवति तथा ङ्याबन्तादपि भवतीति कृत्वा तद्धितप्रत्ययविवरणात् प्राङ् ङ्याप्प्रत्ययौ विवृतौ[3]। अत्र स्वादिसूत्रकथनं (स्वौजसमौट्...४।१।२) खलु 'सुबन्तात् तद्धितः' इति नियमसंसिद्ध्यर्थम्।

समासे स्त्रीप्रत्यये तद्धिताधिकार आरभ्यते। आपञ्चमाध्यायपरिसमाप्तेरयमधिकारः। इह यैः कौशलैः प्रकरणानि स्थापितानि तान्यत्र यथामति विशदीकरवाम।

---

१ अष्टाध्याय्यां क्वचिदादावपवादसूत्राणि भाषितानि, ततः पश्चादुत्सर्गसूत्राणि। अत्र यद्यपि विप्रतिषेधनियमेनोत्सर्गशास्त्रस्यैव बलवत्त्वं प्राप्तं तथापि प्रतिषेधशास्त्राण्येव भवन्ति। यथोक्तम्—'प्रतिषेधस्य विध्यपवादत्वाद् बाधकत्वाद् बलीयस्त्वम्' (३।१।३० कैयटटीका)।

२ विभक्तिधात्वंशकृद्भयोऽन्यः प्रत्ययस्तद्धितः (शब्दशक्तिप्रकाशिका)।

 ३ तद्धिताधिकारः कथं न स्त्रीप्रत्ययात् प्रागभिहित इत्यस्मिन् विषये न्यासकारस्य विचारोऽवलोकनीयः (द्रष्टव्यतां ४।१।७६ टीका)।

तद्धितप्रकरणे द्वौ मुख्यौ विभागौ—भस्वार्थिकः स्वार्थिकश्च। स्वार्थिकस्तु मुख्यत्वादादावुपन्यस्तः।

कृत्सु यथा कालमनुसृत्य प्रत्यया विभक्ताः, न तथा तद्धितेषु। नहि कालेन सह कश्चिदपि सम्बन्धः कल्पयितुं शक्यते सर्वतद्धितप्रत्ययानाम्। अर्थानामप्यपरिमितत्वमेव तद्धितप्रत्यये। अपि च नात्रार्थानुसारिणी प्रत्ययव्यवस्था भवितुमर्हा, अर्थप्रत्यययोरत्रानियतत्वात्। अतो माङ्गलिकेनाचार्येण प्रत्ययमवधीकृत्यार्थव्यवस्थापनं कृतं प्रायेणास्वार्थिकप्रत्ययेषु। अर्थक्रमे किमपि रहस्यं न विद्यते। यस्मिन् प्रत्यये येषामर्थानां दर्शनं भवति तेऽर्था इच्छानुसारेण[1] सङ्कलिताः।

सर्वाधिकव्यापित्वादादौ अण्प्रत्ययाधिकारः (४।१।८३) कृतः। अस्मिन्नधिकारे ये प्रत्यया अर्थभेदेऽपि विधास्यन्ते अणपवादत्वात् तेऽप्यत्रैव निर्दिष्टा ण्यादयः (४।१।८५)। अतिपुष्कलरूपत्वादादौ अपत्यार्थकतद्धिताः। ततो रक्ताद्यर्थेषु प्रत्ययविवरणं कृतम्[2]। अण्प्रत्ययाधिकारमध्ये प्रयोगनियमार्थे शेषाधिकारः (४।२।९२) कृतः। एतस्य कारणं तु 'शेष इति लक्षणं चाधिकारश्च' इति दीक्षितवचसैव स्फुटमिति विज्ञेयम्[3]। शेषाधिकारे 'तत्र जातः'

---

१ तद्धितप्रकरणे सूत्राणां क्रमे बलाबलचिन्ता दृश्यत एव। तच्च—"तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत्। उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम्॥" (४।१।९२ सूत्रवार्तिकम्) इत्यनेन ज्ञायते। यद्यपि विप्रतिषेधनियमेन तद्धितप्रकरणे बलाबलविचारो बहुत्र दृश्यते; यथा 'इञो वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन' (४।१।५९ वार्तिक) इत्यत्र। तथापि पूर्वविप्रतिषेधोऽपि दृश्यते (दृश्यतां ४।१।८५ सूत्रस्य १० वार्तिकम्)।

२ तद्धिते प्रागुदीव्यतीयचातुरर्थिकेत्यादिशब्दैर्विभागकरणस्य कारणमस्ति। क्वचिदेतद्विभागीयेष्वर्थेष्वेव प्रत्ययविधिरधिक्रियते। यथा 'सर्वत्राग्निकलिभ्यां ढक्' (४।२।७ वा. १) इति वार्तिकव्याख्याने कैयट आह—'सर्वत्रेति। सर्वेषु प्रागुदीव्यतीयेष्वर्थेष्वित्यर्थः।' इति।

३ अणधिकारे शैषिकविभागस्यान्यदपि प्रयोजनमस्ति। तच्च—"शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥" इति श्लोकवार्तिकेन स्पष्टं ज्ञायते। 

( ४।३।२५ ) इति सूत्रत एवार्थनिर्देश आरभ्यते । ततः प्राक् शैषिकार्थे येभ्यः प्रातिपदिकेभ्यो ये प्रत्ययाः सामान्येन भवन्ति ते आदावुपन्यस्ताः । यतो ह्येक एव प्रत्ययो यदा बहुष्वर्थेषु भवति तत्र प्रत्यर्थं तत्प्रत्ययकथनेन गौरवं स्यादतः सामान्यप्रत्ययकथनं कृत्वैवार्थाः, प्रत्यर्थं विशेषप्रत्ययाश्चोच्यन्ते । ये पुनः प्रत्यया एकस्मिन्नर्थ एव भवन्ति, तत्रार्थकथनानन्तरं विशेषप्रत्ययकथनमित्येव तद्धितप्रकरणेऽर्थप्रत्ययविभागस्य सामान्यनियमः । एवमणधिकारश्चतुर्थाध्यायस्य तृतीयपादेन सह समाप्तिमेति ।

चतुर्थाध्यायस्य चतुर्थपादे आदौ ठक्प्रत्ययोऽधिकृतः । येष्वर्थेषु ठक्प्रत्ययो बाहुल्येन दृश्यते तेऽर्था एतदधिकारे संगृहीताः । यस्मिन्नर्थेऽपवादप्रत्ययो दृश्यते सोऽप्युक्तः, यथा 'कुलत्थकोपधादण्' ( ४।४।४ ) इत्यादिषु ।

ठगधिकारानन्तरं यदधिक्रियते ( ४।४।७६ सूत्रत उत्सर्गरूपेण ), यत्प्रत्ययस्य ठगपेक्षया‌ऽल्पव्यापित्वात् । अधिकारोऽयं चतुर्थपादसमाप्त्या सह समाप्तिमेति ।

अथ पञ्चमाध्यायवर्तिनस्तद्धितप्रत्यया आलोच्यन्ते । चतुर्थाध्यायीयतद्धितप्रत्ययात् पञ्चमाध्यायीयप्रत्ययानां कीदृशं वैशिष्ट्यमस्तीत्यस्माभिर्न ज्ञायते । पृथगध्यायकरणाज्ज्ञायते भवितव्यमनयोरध्याययोः केनचिन्मौलिकेन भेदेनेति । तदनुसन्धानपरायणैरनुसन्धेयम्[1] ।

आदौ छाधिकारः । ततः 'तेन क्रीतम्' ( ५।१।३७ ) इत्यारभ्य ठञादीनामधिकारः प्रारब्धः । ठञधिकारेऽपि ये प्रत्यया एतदधिकारीयेषु सर्वेष्वर्थेषु भवन्ति ( अपवादं वर्जयित्वा ) ते ठञ्यदादयोऽर्थनिर्देशात् प्रागुपदिष्टाः । शेषाधिकारेऽप्ययमेव क्रमो दृष्टः । एवं पञ्चमाध्यायस्य प्रथमः पादः ठञधिकारश्च समाप्तौ ।

इतः परमस्वार्थिकेषु प्रत्यया नाधिक्रियन्ते, न वा 'प्राक्'—शब्दोऽपि व्यवह्रियते । येष्वर्थेषु प्रत्ययाधिकारो व्यर्थः, द्वितीयपाद एव तेषामुपन्यासः । अस्वार्थिकप्रकरणस्यांशोऽयं परिशिष्टभूतं इति कथयितुं शक्यते, अत एवास्वार्थिकप्रत्ययानामन्ते एतेषामुपन्यासः कृतः ।

---



१ अस्वार्थिकेषु षण्णां प्रत्ययानामेव प्राधान्येनाधिकारः—अण्, ठक्, यत्, छ, ठक्, ठञ्, इति । चतुर्थेऽध्याये अण्ठग्यतोऽधिक्रियन्ते । पञ्चमे तु छठकठञः ।

ततस्तृतीयपादतः स्वार्थिकाधिकारः। अनयोः पादयोरपरमपि वैशिष्ट्यमस्ति। 'समर्थानां प्रथमाद्वा' (४।१।८२) इति पदत्रयमधिकृतं तद्धिताधिकारे। यद्यपि कृत्स्ने तद्धिताधिकारे पदत्रयाणामधिकारेण भवितव्यमिति युक्तम्, तथापि स्वार्थिकेषु प्रत्ययेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नोपयुज्येते इति निवृत्तम्। वावचनमनुवर्तत एव, तेन विकल्पेन तसिलादयो भवन्ति (काशिका ५।३।१)।

स्वार्थिकप्रकरणे आदौ विभक्तिसंज्ञकास्तद्धितप्रत्ययाः। व्याकरणशास्त्रीयप्रयोगसिध्यर्थमेषां पृथक्करणम्। ततः शुद्धाः स्वार्थिकप्रत्यया एव। तत्रापि स्वार्थिकोऽत्यन्तस्वार्थिक इति द्विविधो भेदो दृश्यते। स्वार्थिकप्रत्ययेष्वस्ति खल्वत्यन्तस्वार्थिकनामधेयः कश्चिद् विशिष्टो भागः। दृश्यते चात्यन्तस्वार्थिकस्य [1]मौलिकं वैशिष्ट्यं स्वार्थिकसामान्यात्। यथाह शब्दरत्नकारः—"कुत्साद्यर्थकस्वार्थिकानां 'कुत्सिते' (५।३।७४) इति सूत्रस्थभाष्योक्तरीत्या ङ्याबन्तादुत्पत्तेः सिद्धत्वादत्यन्तस्वार्थिके फलमाह तथाहीत्यादिना" (अजन्तपुंलिङ्गप्रकरणम्)।

समाप्ते तद्धितप्रत्यये समासान्ताधिकारः प्रारभ्यते 'समासान्ताः' (५।४।६८) इत्यधिकारसूत्रेण। अस्ति च प्रयोजनं समासान्तप्रत्ययानां तद्धितप्रत्ययान्तर्गतपठने। अन्यथा उपराजमित्यत्र 'नस्तद्धिते' (६।४।१४४) इति टिलोपो न स्यात्। समासान्तैः प्रत्ययसंज्ञकैर्भवितव्यमिति कृत्वा समासान्तानां समासमध्ये पठनं न कृतम्[2]।

एवं पदानां विश्लेषणं समाप्तम्।

## षष्ठाध्यायः

अथातः शब्दशास्त्रस्य तृतीयो भाग आरभ्यते। प्रथमभागे (१–२ अध्यायौ) पदसंकलनम्, द्वितीये भागे च (३–५ अध्यायाः) पदविश्लेषणं कृतम्। अस्मिन् विभागे

---

१ अत्यन्तस्वार्थिकानामपरमपि वैशिष्ट्यमस्ति। स्वार्थिकाः सुबुत्पत्तेरनन्तरं भवन्ति, अत्यन्तस्वार्थिकास्तु सुबुत्पत्तेः पूर्वमेव। उक्तं च—'एवं चात्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेव प्रवृत्तिरिति भावः' (उद्द्योत ४।१।४८)।

२ समासान्तविषये इदमपि विज्ञेयं यदिमे प्रत्ययाः स्वार्थिका इति कथ्यन्ते (भाष्य ४।१।१)। अत एव स्वार्थिकप्रत्ययानन्तरमेतेषामुपन्यासः। २७१

तु विश्लिष्टयोः प्रकृतिप्रत्यययोः स्थाने ये खल्वादेशा आगमा विकारा वा भवन्ति, तेषां विवरणं प्रस्तूयते। प्रकृतिप्रत्ययविभागः काल्पनिकः, अतः प्रकृतिस्थाने प्रत्ययस्थाने वा यावदादेशादयो न क्रियन्ते, तावत् पदानां सिद्धिर्न भवितुमर्हतीति कृत्वा प्रकृतिप्रत्यययोः स्थाने यानि कार्याणि तान्यत्रारभ्यन्ते।

अत्र प्रकृतिमाश्रित्य यानि प्रकीर्णकानि कार्याणि भवन्ति तान्यादौ भाषितानि। ततः प्रत्ययाश्रितानि कार्याणि, तेषां बहिरङ्गत्वात्। यथाह—

प्रत्ययाश्रितकार्यं तु बहिरङ्गमुदाहृतम्।
प्रकृत्याश्रितकार्यं तु अन्तरङ्गमिति ध्रुवम्॥

[ मुग्धबोध २१ दुर्गादास ]

आदेशकथनात् प्रागादौ द्वित्वविधिर्भाषितः। अस्मिन् प्रकरणे आदेशपक्षो नाभ्युपगम्यते। अत आदेशेषु नायं विधिर्भाषितः, अत एव आदेशेभ्यः पृथक्कृत्यादाविदं स्थापितम्[1]। आदेशसदृशत्वादेवादेशात् प्राक्पठितमिति मन्ये। आरभ्य सम्प्रसारणविधेः (६।१।१३) आदेशा विधीयन्ते। ततः 'आदेच…' (६।१।४५) इत्यारभ्य आत्वविधिः। एषु प्रकरणेषु सर्वे धातुविषयो वर्णिताः। अत एव आदौ इमानि प्रकरणानि स्थापितानि, धातूनां सर्वमूलत्वात्[2]।

आदेशप्रकरणे आगमा अपि कथ्यन्ते। यस्मिन्नादेशे यस्यागमस्यावश्यकताऽस्ति तत्रैवागमविधायकं सूत्रं पठ्यते इति दृश्यते। किंच आगमोऽपि वस्तुगत्या पर्यवसाने आदेश एव। अत आदेशमध्ये आगमानां पठनं नासमीचीनं भवति।

---

१ अस्मिन् प्रकरणे 'द्विःप्रयोगो द्विर्वचनम्' इत्येव भाष्यसिद्धान्तः पारमार्थिकः (दृश्यतामत्रत्यं भाष्यम्, 'आदेशप्रत्यययोः' ८।३।५९ इति सूत्रीयं भाष्यं च)।

२ यद्यपि ६।१।१४ सूत्रं न धातुविषयकं तथाप्यत्रत्यानि सर्वाणि सूत्राणि धातुविषयकाणि, इदमेकं वर्जयित्वा। अत एव 'धातुविषयकमिदं प्रकरणम्' इति कथनं युक्तम्, 'भूयसा तु व्यपदेशः' इति न्यायात्। इह शास्त्रे एकविषयात्मकप्रकरणेषु कार्यसादृश्याद् विषयान्तराणामुपन्यासः प्रायेण दृश्यते। स तु सोढव्य एव। प्रकरणमेकार्थावच्छिन्नसूत्रसमूह इति मुग्धबोधटीकाकृत्।

ततः संहिताधिकारमारभते (६।१।७२) आचार्यः। आदेशा अनेकप्रकाराः-एकवर्णात्मका अनेकवर्णात्मकाश्च[1]। केचिच्च कस्मिंश्चित् परे सति भवन्ति, केचिच्च विषयापेक्षकाः। संहितायां सत्यां यानि कार्याणि भवन्ति तानीत आरभ्य कथ्यन्ते। अत्र वार्णो विकार आरब्धः। द्विधा च वार्णविकारः—एकः पदद्वयसम्बन्धिवर्णद्वयादेशात्मकः, अन्यश्च एकादेशः। द्वितीयः ६।१।८४ सूत्रत आरब्धः सन् ६।१।१११ पर्यन्तं गच्छति। यतो ह्येकादेशविधिरुद्विधानेन सह समासः, अतस्तत्सम्बन्धिनोऽनेकादेशस्यापि विवरणं ततः कृतम्।

संहितायां यथा विकारा भवन्ति वर्णानां तथा कदाचित् सत्यामपि संहितायां वर्णो न विकारमापद्यते। विषयोऽयम् 'प्रकृत्यान्तःपादमव्यपरे'[2] (६।१।११५) इति सूत्रतः प्रपञ्चितः। विधिकथनानन्तरं प्रतिषेधो वक्तव्य इति न्यायादादौ वर्णविकारविधिस्ततस्तन्निषेधः प्रस्तुतः।

यतो हि संहितायामेव सुड् दृश्यते, अर्थात् 'उप + कारम्' इति स्थिते 'उपस् + कारम्' इति प्रयुज्यते। अतः संहिताधिकारे सुड्विधिरपि पठितः[3]।

---

१ अत्रान्ये कथयन्ति—'विकारो नाम वर्णात्मक आदेशः' (शब्दकौ० पृ० ३४४) अनेकवर्णकार्यमादेश इत्यापिशलीयं मतम्।

२ अस्ति चास्य सूत्रस्य पाठान्तरम्। यथा—'नान्तःपादमव्यपरे' इति (काशिका)। एतादृशानि बहूनि पाठान्तराणि लभ्यन्ते। कृतश्च तेषां संग्रहः, य खलु प्रकाशयितव्यो वर्तते। पाठान्तरेषु कः पाठः पाणिनिसम्मत इत्यस्मिन् विषयेऽपि विचारात्मक एको निबन्ध आशु प्रकाशमेष्यति'श्रीमद्भगवत्पाणिनिसंमतसूत्रपाठनिर्णयः' इतिनामधेयः।

३ सन्धिकार्ये प्रकृतिप्रत्यययोः सम्बन्धो नापेक्ष्यते। तत्तु वर्णसंज्ञानुबन्धि सर्वप्रकरणव्यापि। क्वचिद् विषयमपेक्षते सन्धिः। उक्तं हि प्रयोगरत्नमालायाम्—

प्रकृतेः प्रत्ययस्यापि सम्बन्धनियमं विना।
वर्णसंज्ञानुबन्धी यः कार्यः स सन्धिरुच्यते॥ (१।१६५)

हरिनामामृतव्याकरणे चाभिहितम्—

सर्वप्रकरणव्यापी वर्णमात्रनिमित्तकः।
वार्णो विकारः सन्धिः स्याद् विषयापेक्षकः क्वचित्॥ (१।४५)

अत एव पाणिनिना षष्ठाध्यायस्य प्रथमे पाद एव सन्धिः प्रदर्शित इति धीरैरवलोकनीयम्।

समाप्ते सुङ्विधौ स्वरविधिरारभ्यते ६।१।१५८ सूत्रतः। अत्र नास्ति संहिताधिकारः। अतः किमर्थं प्रकरणमिदमत्रैव पठितमिति चेदुच्यते; स्वरविधिरादेशविधिरिवावलोक्यते। अत एवादेशैः सह पठ्यते। यद्वा इतः पश्चादुत्तरपदे सति यानि कार्याणि भविष्यन्ति, यानि वा अङ्गाधिकारविहितानि तान्येवोपन्यस्यन्ते, अवशिष्टत्वात्। स्वरविधिस्तु नैतेषु स्थलेषु कथयितव्यः। अतो गत्यन्तराभावादत्रैवोपन्यस्तः। स्वरविधावपि प्रथमाध्याये एकपदसम्बन्धिस्वरविचारः, द्वितीये पादे सामासिकः स्वरविचारः[1]।

दर्शितानि खलु प्रकृतिविषयकाणि सामान्यकार्याणि यानि सामान्यतः प्रत्यये परे भवन्ति। अथ पदे परे यानि कार्याणि भवन्ति तानि तृतीयपादत आरभ्यन्ते 'अलुगुत्तरपदे' (६।३।१) इत्यनेन। द्वितीये पादे सामासिको विधिः समाप्तः। अतः तत्सम्बन्धत्वादादावेवालुग्विधिरुपन्यस्तः। ततो ये विकाराः केवलमुत्तरपदे परे भवन्ति तेषामुपन्यासः ६।३।३४ सूत्रतः कृतः। अस्मिन् प्रकरणे यथास्थानं मुमनुडादय आगमा अपि विधीयन्ते। आदेशैः सह तेषामपरिहार्यतैव तत्कारणमिति मन्यामहे। उत्तरपदाधिकारः कृत्स्नतृतीयपादव्यापी। अतः सर्वाण्युत्तरपदसापेक्षाणि कार्याण्यस्मिन्नेव पादे समाप्तानीति ज्ञेयम्।

षष्ठाध्यायस्य चतुर्थपादतः सप्तमाध्यायपर्यन्तम् 'अङ्गस्य' (६।४।१) इति सूत्रेणाङ्गाधिकार आरब्धः। अस्मिन्नधिकारे यानि कार्याणि भावीनि तानि पूर्ववर्णितेभ्यः कार्येभ्यः पृथग्जातीयानि। अत एव पृथक्पादेनाङ्गाधिकार आरब्धः[2]। अङ्गसंज्ञाया धातुप्रातिपदिकोभयसम्बद्धत्वात् 'अङ्गस्य' इत्यधिकृत्योभयसम्बद्धप्रकीर्णककार्याणि प्रत्ययनिमित्तकान्यत्र बलाबलविचारेण संगृह्यन्ते। किंच पृथगङ्गाधिकारकरणस्याप्यन्यदपि प्रयोजनमस्ति। 'विप्रतिषेधे परं कार्यम्' (१।४।२) इति यो नियमः सूत्रकृताऽऽस्थितः,[3] स त्वङ्गाधिकारे न

---

१ प्रथमे पादे आद्युदात्तान्तोदात्तभेदेन विषयो दर्शिताः। द्वितीये पादे (समासप्रकरणे) आदौ पूर्वपदस्वरविवरणं तत उत्तरपदस्वरविवरणमिति पदक्रमानुसारिणी व्यवस्था दृश्यते।

२ अङ्गपादे प्रकरणस्य संस्थापनविषये सीरदेवोऽपि स्वविचारं दर्शयामास (दृश्यतां परिभाषावृत्तिः २५ पृ०)।

३ यद्यप्यङ्गाधिकारे विप्रतिषेधनियमस्य व्यभिचारोऽप्यस्ति तथापि प्रायेण परसूत्रस्य बलवत्त्वमेव पुष्कलरूपेण दृश्यते। अत एव 'अङ्गाधिकारेण पूर्वम्' इति कथनं नासमीचीनं भवति।

प्रवर्तते। यथोक्तम्—'विप्रतिषेधे परमङ्गाधिकारे पूर्वम्' (१।४।२ सू० वार्त्तिकम्)। वार्ण-कार्येभ्यः पृथक्कृत्याङ्गाधिकारस्यान्यदपि प्रयोजनमस्ति। तच्च 'वार्णादाङ्गं बलीयः' इति परिभाषया स्फुटं भवति।[1]

प्रकृतिस्थलादेशविवरणपरे चतुर्थपादे आङ्गे आदौ सिद्धा विधय उपन्यस्ताः। ततः ६।४।२२ सूत्रतः 'असिद्धवदत्राभाद्' इत्यनेन केषांचिद् विधीनामसिद्धत्वं प्रदर्शितम्। असिद्धकाण्डोऽयं त्रिपादीयासिद्धकाण्डात् पृथग्जातीयः। अस्मिन् काण्डे विधीयमानस्य प्रत्ययस्य अपेक्षा वर्तते, न तु त्रिपादीयेऽसिद्धकाण्डे। किं चात्र 'पूर्वं प्रति परं शास्त्रमसिद्धम्' इति त्रिपादीयनियमवत् कश्चिन्नियमो नोररीक्रियते। अत एवायमसिद्धकाण्डः पृथगुपन्यस्त आचार्येण।[2]

---

१ किं चाङ्गाधिकारे 'तस्य च तदन्तस्य च' इत्यपि नियमः प्रवर्तते। अत एवैतन्नियम-सम्बद्धानां कार्याणामेकत्र संकलनं युक्तम्। 'उत्तरपदे' (६।३।१) इति सूत्रीयाधिकारे यानि सूत्राणि पठितानि तानि यद्यपि समासविधौ कथयितव्यानीति कथयितुं शक्यते, तथापि तस्मिन् कृते सति व्याकरणशास्त्रीयप्रक्रियायां दोषः स्यादिति कृत्वैव सूत्रकृता पृथगेतेषां संकलनं कृतम्। 'तस्य च तदन्तस्य च' इति नियम उत्तरपदाधिकारेऽपि प्रवर्तते (१।१।७१ सूत्र-भाष्ये कैयटः)। एतन्नियमसंसिद्ध्यर्थमेवात्रस्यकार्याणामेकत्र संकलनं कृतम्।

२ केचिद् वदन्ति—पाणिनिर्द्वितीयाध्याये लुक्प्रकरणं स्थापितवान्, चतुर्थे गोत्रेऽलु-गचीत्यत्र, षष्ठे अलुगुत्तरपद इत्यत्र तदपवादभूतमलुकं कथितवान्, कथं नैतयोरेकत्र समावेशो विहित इति? उच्यते; शब्दविकृतेर्ज्ञानक्रमानुसारेण प्रायेण पाणिनिना प्रकरणानि स्थापितानि। अत उत्सर्गापवादभावयुक्तानां सूत्राणामेकत्र संकलनं करणीयमेवेति कथनं न सुष्ठु स्यात्। अस्मिन् विषये भर्तृहरिराह—

अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः।
एकमेवेष्यते कैश्चिद् भिन्नरूपमिव स्थितम्॥
नियमः प्रतिषेधश्च विशेषश्च तथा सति।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः॥ इति।

## सप्तमोऽध्यायः

आङ्गे प्रत्ययसामान्ये परे प्रकृतेर्यानि कार्याणि भवन्ति तानि समाप्तानि। अथ प्रत्ययानां ये आदेशा भवन्ति, तेऽपि वक्तव्या इति कृत्वा सप्तमाध्यायस्य प्रथमे पादे प्रत्ययादेश आरब्धः। समाप्ते प्रत्ययादेशे पुनरागमादीनां विचारः प्रारब्धः। प्रत्ययादेशः ७।१।४५ सूत्रे समाप्तः।

इतः प्राक्प्रत्यये परे यानि कार्याणि भवन्ति तानि कथितानि। विकरणे परेऽपि तथैव धातुविषये आङ्गानि कार्याणि वक्तव्यानीति कृत्वा तानि द्वितीयपादे आरब्धानि। अत्रेदं चिन्तयितव्यम्—षष्ठाध्यायस्य तुरीये पादे प्रकृतिसम्बद्धकार्याणां विवरणात् सप्तमद्वितीयपादीय-कार्याणामपि प्रकृतिसम्बद्धत्वात् कथं न प्रथमपाद एव 'सिचि वृद्धिः परस्मैपदेषु' (७।२।१) इति प्रकरणमारब्धम्? उच्यते; एषा हि सूत्रकारस्य शैली लक्ष्यते यत् स अध्यायारम्भे पृथग्-जातीयानां पदार्थानां विवरणं करोति। अतो यदा सप्तमाध्यायः प्रारब्धस्तदा प्रकृतिसंबद्धेभ्य आङ्गकार्येभ्यः सम्यक्पृथग्जातीयानां प्रत्ययादेशानां विवरणं कृतम्। समाप्ते तु तस्मिन्, प्रकृतिसम्बद्धानि कार्याणि पुनरारभते आचार्यः। विषयेऽस्मिन्नन्यदपि यत् कारणं भवितुमर्हति तदपि चिन्तयितव्यम्।

समाप्ते सिचिवृद्धिप्रकरणे इड्विधिरारभ्यते। सिचिवृद्धिप्रकरणे इडागमज्ञानस्या-परिहार्यताऽस्ति, यतो हि इडादौ सिचि वृद्धिर्न भवति (७।२।६), अतः ७।२।८ सूत्रत इड्विधिरारब्धः। इड्विधौ आदौ अपवादः पश्चादुत्सर्गो विवृतः। क्रमोऽयं शास्त्रविरुद्ध इति चेन्न; यतो हि पुरस्तात् प्रतिषेधकाण्ड आरब्धोऽतस्तस्याधिकं बलवत्त्वं बोध्यते[1]। इड्विधिरयं ७।२।७८ सूत्रे समाप्तः।

एतदनन्तरं प्रकीर्णकान्येव कार्याण्यारभ्यन्ते। विभक्तौ परतो यानि कार्याणि तानि ७।२।८८ सूत्रत आरभ्य ७।२।११३ सूत्रपर्यन्तं गच्छन्ति। ततस्तद्धितप्रत्यये परे यः पुष्कलो वृद्धिविधिरास्ते तस्य विवरणं ७।२।११७ सूत्रत आरब्धम्। तच्च ७।३।३१ सूत्रे समाप्तं भवति।

---

१ यथा 'स्वरतिसूतिसूयति........(७।२।४४) इति परं सूत्रं बाधित्वा 'श्र्युकः किति' (७।२।११) इति सूत्रमेव प्रवर्तते, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्। अत एव सूत-भूतेत्यादौ न इड् भवति।

अत्रेदं चिन्तनीयं वर्तते यत् सप्तमाध्यायस्य तृतीये पादे आदावेव तद्धितीयो वृद्धिविधिर्भाषितः। परन्तु 'तद्धितेष्वचामादेः' (७।२।११७) इति सूत्रं खलु किमर्थं द्वितीये पादे उपन्यस्तम्? कथं नेदं सूत्रं तृतीयपादस्यादिमसूत्ररूपेणैव लिखितम्? स्याच्च युक्ततरः पृथक्पादे पृथग्जातीयस्य विषयस्यारम्भः। ध्यायं ध्यायमप्यस्योत्तरमस्माभिर्न ज्ञातमिति विनिवेद्यते। ततोऽवशिष्टे तृतीये पादे नैकविधेषु प्रत्ययेषु परेषु यानि कार्याणि लोपागमविकारादीनि भवन्ति तानि बलाबलविचारेणोपन्यस्तानि।

एषु पादेषु यत्र प्रकीर्णकानि कार्याण्यारभ्यन्ते तत्र सूत्राणां स्थापने कीदृशः क्रमः सूत्रकृताऽऽस्थित इति प्रश्ने प्राप्ते ब्रूमो वयम्—निमित्तनिमित्त्यादेशसादृश्येन सूत्राणि क्रमशः स्थापितानि। प्रकीर्णकेषु प्रकरणेषु शब्दविज्ञानदृष्ट्या न प्रकरणानि स्थापितानि प्रायेण प्रयोजनाभावात्। कदाचिद् समाने निमित्ते यानि कार्याणि तानि बलाबलविचारेण स्थापितानि, कदाचिच्च समाने आदेशे। यत्रादेशसाम्यं तत्र निमित्तेषु वैभिन्न्यम्, यत्र च निमित्तसाम्यं तत्रादेशवैभिन्न्यमिति सर्वत्र दृश्यते। एवमनेकप्रकीर्णकार्यविधानं कृत्वाचार्येण तृतीयपादः समाप्तिं नीतः।

प्रागेकविकरणे परे सति यत् कार्यं भवति तद्दर्शितम्। चतुर्थपादे तु विकरणद्वये परेऽपि यत् कार्यं स्यात्, तदादावारब्धम्। अस्मिन्नध्याये [1]प्रकरणानां स्थापनं कार्यार्थमेव, अतः प्रथमाद्यध्यायेषु यथा भाषाविज्ञानदृष्ट्याऽपि प्रकरणानि क्रमेण स्थापितानि, तथा नात्र संभाव्यते। पादेऽस्मिन् धातुविषयकाणि कार्याण्येव प्राधान्येनोपदिष्टानि। पादस्यान्तिमांशे 'अत्र लोपोऽभ्यासस्य' (७।४।५८) इत्यनेनाभ्यासस्येत्येतदधिकृतं भवति। यद्यपीदं प्रकरणं षाष्ठेऽभ्यासप्रकरण एव वक्तुमुचितं तथापि तस्मात् प्रकरणादस्य किमपि वैशिष्ट्यमस्ति। तच्च 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ति' इति परिभाषया विज्ञाप्यते। अत्रत्येषु सूत्रेष्वेव परिभाषेयं प्रवर्तत इति कृत्वात्रत्यसूत्राणां पृथक्करणं कृतम्।

---

१ प्रकरणस्य वैशिष्ट्यविषये कैयटेनाभ्यधायि—'अथवा प्रकरणस्य विशेषस्मृतिहेतुत्वाद् प्रकृतान्येवात्मनेपदानीहात्मनेपदशब्देनोच्यन्ते' (१।४।७९ टीका)। न तु शानजादीनीति शेषः।

## अष्टमाध्यायः

समाप्तानि खलु प्रकृतिप्रत्ययसम्बन्धीनि सर्वाणि कार्याणि, पदनिर्माणञ्च समाप्तम्। अथास्य शास्त्रस्यावशिष्टं वक्तव्यमत्र कथ्यते।

'सर्वस्य द्वे' ( ८। १। १ ) इत्यधिकारसूत्रेणादौ द्विर्वचनविधिर्भाषितः। यद्यपि प्रकरणमिदं षाष्ठे द्विर्वचनविधावेव वक्तव्यमिति कथयितुं शक्यते तथापि पृथग्जातीयत्वात् पृथगध्यायेऽस्य निवेशः कृतः। इह प्रकरणे 'स्थाने द्विर्वचनम्' इति पक्ष एवाभ्युपगम्यते। षाष्ठे तु 'द्विःप्रयोगो द्विर्वचनम्' इति पक्षः।

यतो हि पदनिर्माणं समाप्तमतः 'पदस्य' ( ८।१।१६ ) इत्यधिकारः सुवच एव। अस्मिंश्च पदाधिकारे आदौ कश्चित् स्वरविधिः ८।१।१८ सूत्रतोऽधिक्रियते। यतो हि द्वितीय-पादतोऽसिद्धकाण्ड आरब्धो भविष्यति। स्वरविधिश्च सिद्ध एव। अत आदौ स्वरविधेरुपन्यासः। षष्ठाध्याये विहितेभ्यः स्वरेभ्यः पृथक्कृत्यात्रत्यं स्वरविधानम् 'पदस्य' 'पदात्' इत्यपूर्वमधिकारद्वयं निमित्तीकृत्यात्यत्रविधिः प्रवर्तत इति [1]ज्ञापनार्थमपि।

द्वितीयपादतोऽसिद्धकाण्ड आरब्धः 'पूर्वत्रासिद्धम्' ( ८।२।१ ) इत्यनेन। अत्राप्यादौ पदसम्बन्धीनि कार्याणि। ततोऽपदान्ताधिकारः ८।३।५५ सूत्रतः प्रवर्तिष्यते। असिद्धकाण्डे प्रकरणानां स्थापनेऽपि 'पूर्वत्रासिद्धम्' इति विधिरनुसृतः। एवं ह्याह—'त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्' ( सि० कौ० )। यतो हि पदज्ञानमन्तरेणापदान्तज्ञानं न स्यादतः समाप्ते पदविधौ ८।३।५५ सूत्रतोऽपदान्ताधिकारः कृतः। ततः पूर्वोक्तनियमेन चतुर्थपादे णत्वादिविधय उपवर्णिताः।

एवं दाक्षीपुत्रस्य शास्त्रं समाप्तं भवति। अत्र विनिवेद्यतेऽस्माभिर्यद् बहु चिन्तितं प्रकरणानां क्रमे कीदृशी न्याय्यताऽस्ति तां दर्शयितुम्। सर्वेषु स्थलेष्वस्माभिर्न विज्ञातं

---

१ अष्टमाध्याये यान् शब्दानधिकृत्य स्वरविधिर्भाषितस्तेषु षाष्ठस्य स्वरप्रकरणस्योप-स्थितिर्न भवति। यथाहोद्योतकारः—'....अष्टमे तु नास्याः सिद्धान्तेऽप्युपस्थितिर्व्याख्याना-दिति भावः' ( ६।१।१ भाष्यटीका, पृ. १४७ )।

प्रकरणक्रमरहस्यम् । तच्च तत्तत्स्थलेषु निवेदितमपि । क्वचिच्चासम्यक् कारणं वर्णितम् । अस्माकमस्थिरा बुद्धिरेव तत्कारणमिति ब्रूमहे । अस्मिन्नतिगम्भीरे विषये प्रथमोऽयं प्रयास इति कृत्वा सुधीभिरत्रापि चिन्तयितव्यम्, येन 'वादे वादे जायते तत्त्वबोधः' इत्याभाणकश्चरितार्थः स्यात् ।

मदीयपरमाराध्यैः श्रीमद्रघुनाथशास्त्रिचरणैर्निबन्धोऽयमवलोकितो विचारितश्च । तदर्थं तेभ्यः परस्सहस्रं नमः । अत्रत्यानि सर्वाणि वस्तूनि मदीये 'श्रीमद्भगवत्पाणिनिसंमतसूत्रार्थ-निर्णय'-नामधेये ग्रन्थे विशदीभविष्यन्तीति निवेद्य विरमामि ।

यस्या जातमिदं यया विरचितं यस्यां विलीनं भवेद्  
या वै सर्वमयी च यां प्रणमति ब्राह्मीं च विद्वज्जनः ।  
यस्याः कल्पनमत्र संसृतिरहो यस्यै श्रुतेर्वेदनं  
सत्ता साऽमितबोधबीजप्रमिता बोभोतु बुद्धौ मम ॥

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।

---

# संस्कृतज्ञैरद्य किं कार्यम्

श्रीप्रकाशचन्द्रगौडः

आसीद्भारतं प्राचीनकाले भूतलस्य सर्वानपि देशानतिशयानमिति तु प्रायः समेषामपि कृते निर्विवादम्। किमस्यातिशयनस्य प्रधानं निदानमिति समुपस्थिते विचारे निश्चितमेतदेवायाति यद्भारतीयानां तदानीन्तनं जीवनमन्तर्बहिः समानरूपेणादर्शभूतमासीत्। तदानीन्तनस्य भारतीयसमाजस्यायमासीत् क्रियात्मकः सिद्धान्तो यदधीतिबोधाचरणप्रचारणैरेव शिक्षाया वास्तविकमुद्देश्यं पूर्णतामापद्यते। अधुना तु न केवलं भारते, अपि तु सर्वेष्वपि देशेषु शिक्षाक्षेत्रे तादृशी प्रधानताऽऽचरणाय न प्रदीयते। एतादृशं यत्किमपि क्रियात्मकं भारतीयं जीवनवृत्तमासीत्तत्सर्वं संस्कृतभाषायामेव निबद्धमास्ते। यदतीतगौरवमत्रलब्ध्याद्यापि भारतीयः सर्वत्र गुरुतामनुभवति, तस्येतिहासः संस्कृतभाषामन्तरा न कुत्रापि लब्धुं शक्येत। अतो यदि भारतीयमतीतमवगन्तुं कामयते चेत्कश्चित्तर्हि संस्कृतसाहित्यावगाहनमन्तरा तथा कर्तुं स न पारयेत। यस्यां भाषायामीदृशं विश्वजनीनं गौरवं निहितमस्ति, सा मृतभाषेति ये वदन्ति, वस्तुतस्ते स्वयमेव नितान्तं मृता इत्याकलनीयं बुधवरैः। एवमेव तस्या भाषाया ज्ञातारोऽपि महानुभावा यदि जीवनस्य व्यावहारिकं दृष्टिकोणमपहायेतश्चेत एवं परिभ्रमेयुस्तर्हि महीयसः खेदस्यायमवसरः। येषां संस्कृतज्ञानामुपरि समस्तस्य भारतीयसमाजस्योत्तरदायित्वमासीत्, ते स्वीयमुत्तरदायित्वं विहाय समाजस्याधुनिकस्य जीर्णशीर्णदशामवलोक्यापि यदि मौनमावहेयुस्तर्हि महानयमपराधः।

स्वीक्रियते यच्छताब्दीभ्यो देशेऽस्मिन् वैदेशिकानां शासनमासीत्, येन संस्कृतज्ञानां न तादृशं मानं समाजेऽभवद् यादृशं पूर्वमासीत्। परमेतादृशीं विचारावलीमावहमानैर्महानुभावैराकलनीयमेतद् यद् यद्यपि वैदेशिकशासनसमये संस्कृतभाषाविदां नासीद्बहुसंख्या, न वासीत्तेषां तदानीन्तनसमाजस्योपरि महान् प्रभावस्तथापि तदाऽनेकग्रन्थानां रचना जाता। ये संस्कृतज्ञाः कर्मण्या आसन् ते संस्कृतसाहित्यं परिवर्धयितुं सदैव प्रयतमाना अभूवन्, तथा स्वीयममूल्यमन्वेषणं स्वविरचितेषु ग्रन्थेषु समरक्षयन्। तदानीं साहित्ये आयुर्वेदे व्याकरणे ज्योतिषि तथाऽन्येष्वपि विभिन्नेषु ज्ञानविज्ञानकलाक्षेत्रेष्वनेके ग्रन्था निरमायिषतानेकैर्विद्वद्वरैः।

अधुना तु सौभाग्येन देशोऽयमस्माकं स्वतन्त्रतामधिगतः। अतोऽस्य देशस्य सर्वतोमुखी समुन्नतिरद्य कथं सम्भवेदिति विचिन्तनमद्यतनस्य प्रत्येकभारतीयनागरिकस्यास्ते प्रधानतमं कर्तव्यम्। पूर्णविवेचनानन्तरमस्माभिरेतन्निर्धार्यते यदस्य देशस्य कल्याणं तदैव सम्भाव्यते यदैते संस्कृतज्ञा भारतीयसमाजस्य सङ्घटनं यथासम्भवं भारतीयपरम्परानुसारं विदध्युः। यद्यपि साम्प्रतं सर्वत्रान्ताराष्ट्रियताया एव निनादः प्रतिदिनं श्रुतिपथमाविशति, तथापीदं सदैवानुभविभिर्महानुभावैः स्वीकर्तव्यं यदेकस्य देशस्यानेकपरिस्थितयोऽपरदेशेभ्योऽनेकेष्वंशेषु सर्वथा भिन्ना आसते। भारतीयदृष्टिकोणो भवत्वन्ताराष्ट्रिय इत्यत्र तु नं कश्चिद्विवादः, किन्तु तादृशे दृष्टिकोणेऽस्माकं परम्पराणां न भवतु सर्वथाऽवसानमिति विशेषेण ध्येयमास्ते।

बहुकालादस्माकं समाजस्यैतादृशी धारणा जाताऽस्ति यत्संस्कृतज्ञा विद्वांसः सन्तोऽपि लोकव्यवहारानभिज्ञाः सन्ति, तथा राष्ट्रिया अन्ताराष्ट्रियाश्च विभिन्नाः समस्याः सम्यगवगन्तुं नालम्। अस्या धारणायाः परिणामोऽयं यत्संस्कृतज्ञानां विभिन्नेषु सामाजिकेषु क्षेत्रेष्वद्य न तादृशः सम्मानो यादृशः पूर्वमासीत्। समाजे संस्कृतज्ञानामिदानीमेतादृशी दुरवस्थाऽस्ति यत्तेषां जीवननिर्वाहोऽपि कथंचित्सम्भवति। केचिन्महीयांसोऽपि विद्वांसः संस्कृतपाठशालासु नाममात्रं द्रव्यं लभन्ते, तथा केचिदन्ये स्वनिर्वाहाय पूजापाठादीनि साधनान्यवलम्बन्ते। वस्तुतो विषयेऽस्मिन् यदि गूढविवेचना विधीयते, यदि चाधुनिकानां संस्कृतज्ञानां व्यावहारिकज्ञानं सम्यक्परीक्ष्यते, तर्हि निश्चितमेतदेव ज्ञातं भविष्यति यत्तेषां विषयेऽनेके पूर्वोक्ता आरोपा बहुष्वंशेषु प्रायः सर्वथा यथार्थतामाभजन्ते। यतो हि ते महानुभावा अधुना प्रायः समाजबहिर्भूता इव वर्तन्ते। परमेतच्चिन्तनीयमस्ति यद्यदि देशस्यास्य वास्तविकं कल्याणमपेक्ष्यते, तर्ह्येतेषामेवं व्यवहारानभिज्ञानां समाजानुपेक्षितानां संस्कृतज्ञानामेव शरणमादेयं भविष्यति। तथा प्राचीनपरम्परानुगता यथासमयं यथासम्भवं परिवर्तनशीला तेषां विचारधारैव भविष्यतो भारतीयसमाजस्याधारशिला यदा भविष्यति, तदैव विश्वेऽस्मिन् भारतस्य प्राचीनं गौरवं पुनः सुस्थितं सम्भत्स्यते।

यदा संस्कृतज्ञानामुपर्येतादृशं सामाजिकमुत्तरदायित्वं विद्यते, तदा स्वविषये तैरपि किमप्यवश्यं विवेचनीयमास्ते। वस्तुतो येषां संस्कृतज्ञानां दैनिकाचरणमेव समाजस्य कृते लोकाचार आसीत्, येषां सम्मतः पन्था जनतायै सर्वथोपादेय आसीत्, जीवनसम्बन्धिनीनां विभिन्नसमस्यानां विषये येषां स्वकीय एको निश्चितदृष्टिकोण आसीत्, येषामक्षिप्रक्षेपे समाजे शान्तिक्रान्तिसम्पादनक्षमतासीत्, येषां सम्मतिमन्तरा शासनमासीदसम्भवम्, स्वकल्याणाय ३८१

समस्तो देशो येषां मुखमपेक्षमाण आसीत्, येषामादेशं विना समाजे तृणमपि नाचलत्, आराजरङ्कं येषां विवेचनात्मिका दृष्टिर्गता, तेऽद्य समाजे व्यवहारानभिज्ञाः कथ्यन्त इति किमस्य प्रधानं कारणमित्यवश्यं विवेचनीयम्। समस्तसंस्कृतसाहित्यस्यावगाहनं विधीयेत चेत्तर्हि ज्ञातमिदं भविष्यति यत् प्राचीनकाले संस्कृतज्ञाः केवलं संस्कृतभाषाभिज्ञा एव नासन्, अपि तु सर्वत्रैव तेषां समुचिता विवेकपूर्णा दृष्टिरासीत्। अद्यातिप्राधान्यमापन्नानां व्याकरण-न्यायादिविषयाणां पूर्णज्ञानेन साकं तेषां संस्कृतविदामितिहासभूगोलगणितज्यौतिषायुर्वेद-धनुर्वेदप्राणिशास्त्रकामशास्त्रसंगीतराजनीत्यादीनामन्येषां समेषामपि विषयाणां पूर्णपरिज्ञान-मासीत्। ज्ञानविज्ञानकलानां न किमपि क्षेत्रमीदृशं दृश्यते, यस्योपरि तेषां विवेचनान्वितम-न्वेषणं नोपलभ्येत। परमधुना खेदोऽयमस्ति यदस्माकं प्रगाढपाण्डित्यं व्याकरणसाहित्यन्या-यादिकतिपयविषयपरिमितमेव प्रायो विद्यते। अल्पा एव संस्कृतविद ईदृशाः सन्ति साम्प्रतं ये स्वप्राचीनसंस्कृतसाहित्यस्य विभिन्नक्षेत्रैः सुपरिचिता भवेयुः। अनेकाः स्मृतयः, अनेकानि सूत्राणि, अनेका नीतयः, अनेके शासनविधयः, अनेकाः कलाः, अनेकानि विज्ञानानि सन्ती-दृक्षानि येषां परिज्ञानमस्माकं संस्कृतज्ञानां कृते प्रायो नैव विद्यते। वयं प्रायः संस्कृतसाहित्यस्य गौरवं प्रशंसामः, परं कियन्तोऽस्मासु तद्गौरवान्वितं विषयं प्राचीनग्रन्थेभ्यो विश्लिष्य जनतायाः पुरस्तात् समुपस्थापयन्ति येन जनतापि तं समवगन्तुं शक्नुयात्? अतीतकालेऽपि संस्कृतज्ञानां समाजे सम्मान आसीत्, स न केवलं संस्कृतभाषाध्ययनाश्रितोऽपि तु विभिन्नविषय-परिज्ञानपूर्विका लोकसमस्यासमाधानशक्तिरेव तेषां समादरस्य प्रधानं हेतुरासीत्। किं प्रोत्सहते कश्चिन्मनुयाज्ञवल्क्यादीन् ऋषीन्, द्रोणभीष्मादीन् गुरून्, कालिदासहर्षादीन् कवीन्, कणादगौतमादीन् दार्शनिकानव्यावहारिकशब्देनावमानयितुम्?

अस्यां विपरीतपरिस्थितौ संस्कृतज्ञेनाद्यतनेनास्ते बहु कर्तव्यम्। तेन तथा प्रयतनीयं यथा तस्य ज्ञानमियद्विस्तृतं स्याद् यत्समाजस्य किमपि क्षेत्रमीदृशं नावशिष्येत यस्य तस्य कृते पूर्णं ज्ञानं न भवेत्, तदीयं जीवनमन्येषां कृते सदानुकरणीयं स्यात्, शासनादिषु सर्वेषु महत्त्वमायातेषु कार्येषु तस्य पूर्णप्रवेशं नितान्तमावश्यकं जनताऽनुभवेत्, समाजनियमनं तस्य विशेषाधिकारः स्यात्, तदीया त्यागभावना स्यान्न दैन्यजन्या अपि तूच्चतमादर्शप्रेरिता, तस्य जीवनमन्तर्बहिरेकरूपतामापद्येत, तस्य दृष्टिपाते शान्तिक्रान्तिसम्पादनक्षमता जायेत, तस्योदारता न जायेतेदृशी या तमेव भक्षयेत्, तदीयं देवत्वमीदृशं भवेद्यन्न स्यात्कदापि

धर्षणीयमसुरैः, स्यात्तस्य तर्कशक्तिरदम्या, स्यात्तस्य ज्ञानयोगः कर्मयोगसम्पन्नः, स्यादीदृशी तस्य सरलता या परमोद्धतानपि विनमयेन्न तु तमेव समाजे विमाननां गमयेत्।

दृढमाशास्यते यत् संस्कृतज्ञेषु भविष्यति चेदिदं महत्परिवर्तनम्, तर्हि न केवलं भारतमपि तु समस्तं विश्वं तस्य पुरस्ताद्भविष्यति नतमस्तकम्। मनुदधीचिकणादगौतमव्यासद्रोणाचार्यभीष्मपाणिनिपतञ्जलिकालिदासधन्वन्तरिचाणक्यादीनां महापुरुषाणामनेकान्युदाहरणानि पुनरपि देशेऽस्माकं समुपस्थितानि भविष्यन्ति। तथा समयः स पुनरपि समागमिष्यति यदा समस्तः समाजः स्वजटिलप्रश्नसमाधानाय संस्कृतज्ञस्यैव मुखमपेक्षिष्यते। आशाऽस्ति महीयसी यद्वयं संस्कृतज्ञा अवश्यमेव स्वकर्तव्यं परिज्ञाय तथा प्रयतिष्यामहे शीघ्रं यथा समाजस्य नेतृत्वं पुनरप्यस्मानेव स्वयमेवाङ्गीकुर्यात्।

---

# संस्कृतपाठशालानां दशा

श्रीमुरलीधर उपाध्यायः

पुरा किल अस्मिन्नेव भारतवर्षे संस्कृताध्ययनाध्यापनाय स्थापिता ये आश्रमा आसंस्तत्र ब्रह्मचर्यव्रते स्थिता लौकिकवासनानानुलिप्ताश्छात्रा अहर्निशमाश्रमनियमान् परिपालयन्त ऐहिकामुष्मिकफलप्राप्तिकामनया केवलं गुरोराज्ञामेव सर्वतः श्रेष्ठां मन्यमानाः षडङ्गवेदाध्ययनं सम्पाद्याधिगतगृहस्थाश्रमनियमा यथाशक्ति गुरवे दक्षिणां च प्रदाय स्वस्वाभिलषितकार्यसम्पादने रता अदृश्यन्त। तत्र निष्णाताः स्नातका न केवलं पुस्तकपण्डिताः, अपि तु सर्वविधलौकिककार्याणि सम्पादयन्तो विलक्षणनूतनाविष्कारादिना असारतामपि संसारस्य सारतां दर्शयन्तो राजनैतिकभौगोलिकादिविषयेष्वपि स्वबुद्धिपाटवं प्राकटयन्। अधिगतयाथातथ्यास्ते स्वयं विगतविषयतृष्णाः सन्तोऽपि संसारार्णवनिमग्नानां जनानां कल्याणहेतवे किंनामविषयकान् ग्रन्थान् न व्यरचयन्? तत्प्रणीतानेकविषयकग्रन्थावलोकनेनेदं निश्चीयते यद् येऽधुना विज्ञानप्रभावान्नूतनाविष्कारा अस्माकं मनांस्याकर्षन्ति संमोदयन्ति च तेषां सर्वेषां तदानीमप्यस्तित्वं येन केनापि रूपेणासीदेव।

कालप्रभावात् संस्कृतसाहित्यस्योपर्यनेकविधप्रहारोपपातैः साधारणजनानां प्रवृत्तिस्ततो विमुखी बभूव। केवलं त एव बुधाः प्रातस्मरणीयाः सन्ति ये 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति सिद्धान्तमवलम्ब्यानेकविधकष्टान् सहमाना अप्यध्ययनाध्यापनादिना संस्कृतसाहित्यस्य रक्षणं न तत्यजुः। तेषामेव प्रभावादाधुनिकसंस्कृतविद्यालयेष्ववशिष्टाध्ययनाध्यापनप्रणाली दृष्टिगोचरतां याति।

वर्तमानपाठशालीयदशामवलोकयतः कस्य मनो न दूयते? विदेशीयशासनकाले आंग्लभाषाया व्यापकप्रचारात् संस्कृतसाहित्यस्येष्टसाधनत्वाभावेनाव्यावहारिकत्वाच्च एतस्याध्ययने जनानामभिरुचिर्न जाता। ये च संस्कृताध्ययनाध्यापने तत्परा विशिष्टा विद्वद्वराः
३८४ सन्ति तेषां लोकदृष्ट्या न क्वापि प्रभावो गौरवं च। धर्मार्थकाममोक्षोपयोगिसाधनभूतां सकलविषयकज्ञानराशिभूताममरवाणीमुद्धर्तुकामा नाधिकारिणो नापि भारतीयभूपतयश्च जाताः। अस्यां

परिस्थितौ धार्मिकजनताद्वारा कृतेऽपि छात्रवृत्त्यादिप्रबन्धे संस्कृतपाठशालासु छात्रसंख्याया ह्रास एव प्रतिदिनं दृष्टिगोचरो भवति। तत्र प्रविष्टाश्छात्राः संस्कृतमधीयाना अप्येतस्याध्ययनं व्यर्थमिति मन्यमाना आंग्लहिन्द्यादिपरीक्षास्वपि प्रविविक्षवः सन्ति, लभन्ते चोभयविषयेऽपि पल्लवग्राहिपाण्डित्यमेव। हन्त पाठशालासु नियुक्ता अध्यापकाः कथङ्कारमस्मिन्नवे महर्घतायुगे स्वल्पवेतनेन कार्याणि संचालयेयुः? कथं च स्वाध्यापकदशामवलोकयन्तस्तदन्तेवासिनः संस्कृताध्ययने प्रवृत्ता भवेयुः?

भारतीयसंस्कृतिपोषकस्यातिप्राचीनसंस्कृतसाहित्यस्य दयनीयदशामवलोक्य पारतन्त्र्यश्रृङ्खलानिर्मुक्तेऽस्मिन् स्वतन्त्रे भारतवर्षे तदुद्धरणाय कृतसङ्कल्पाः शिक्षाधिकारिणः प्रचलितान्यसाहित्यवदस्याप्याकर्षकत्वं यथा स्यादिति बुद्धया पूर्वप्रचलितराजकीयसंस्कृतमहाविद्यालयीयपरीक्षापाठ्यक्रमे आवश्यकं परिवर्तनमकार्षुः। अद्यावधि संस्कृताध्ययनाध्यापने संलग्ना बुधा ऋतेऽध्यापनकार्यं लोके न क्वापि स्थानेषु विनियोज्या आसन्। ते च स्वस्वविषयेषु प्रगाढपाण्डित्यं प्रकटयन्तोऽपि प्रचलिताधुनिकेतिहासभूगोलनागरिकशास्त्रादिविषयेष्वनभिज्ञाः सन्तस्तानि स्थानानि नोपलब्धुं शक्नुवन्ति यान्यन्यविद्याध्येतारः सुलभतया प्राप्नुवन्ति। प्रचलिते परिवर्तितपाठ्यक्रमे चैतेऽपि संस्कृतविद्यालयीयस्नातकाः प्रौढपाण्डित्यं रक्षन्तोऽपि निःसन्देहं प्रतिष्ठितपदेषु नियुक्ताः सन्तो लोकदृष्ट्यापि सम्मानार्हा भवेयुः।

अयं च हर्षस्य विषयो यदस्मद्राज्यपालमहोदयेनेदमुद्घोषितं यन्नवीनपाठ्यप्रणाल्या क्रमशः प्रथमा पूर्वमध्यमा उत्तरमध्यमा-शास्त्रिपरीक्षासु उत्तीर्णाश्छात्रा जूनियरहाईस्कूल-हाईस्कूल-हायरसेकेण्डरी-बी०ए०-परीक्षोत्तीर्णसमाः सन्ति। एतेऽप्यद्यावधि दुर्लभेषु जिलाधीशादिपदेषु नियुक्ता भविष्यन्ति।

संस्कृताध्यापकानां छात्राणां च कृतेऽयं स्वर्णावसरोऽस्ति। यदि चास्मिन् शुभावसरे संस्कृतज्ञाः स्वाभ्युन्नत्यै संस्कृतसाहित्यस्य प्रचाराय प्रसाराय च दृढपरिकरा न भवेयुस्तर्हि मन्ये तेषां दशाऽनिर्वचनीयैव स्यात्। अतस्तैः संहतीभूय संस्कृतसाहित्यस्य व्यापकः प्रचारो यथा भवेत्तथा प्रयतनीयम्।

---

# सम्पादकीयम्

## संस्कृतपरीक्षाणां मान्यताघोषणा

उत्तरप्रदेशीयशासनेन प्रथमं १९५१ ईशवीये जुलाईमासस्य १७ दिनाङ्के केवलं प्रथम-परीक्षायाः, तदनन्तरं सितम्बरमासस्य १८ दिनाङ्के प्रथमायाः, पूर्वोत्तरमध्यमयोरांग्लभाषा-सहितयोः,आंग्लभाषासहितायाः शास्त्रिपरीक्षायाश्च क्रमेण जूनियरहाईस्कूल-हाईस्कूल-इन्टरमीडियट-बी०ए०परीक्षाणां समकक्षतोद्घोषिता। उत्तरप्रदेशराज्यपालस्यादेशेन प्रथमादिपरीक्षोत्तीर्णाश्छात्रा इतः प्रभृत्येव राजकीयपदेषु नियुक्ता भवेयुः। शिक्षणसंस्थासु, पुनःशिक्षण-( ट्रेनिंग ) महा-विद्यालयेषु, औद्योगिकसंस्थासु च प्रवेशं प्राप्नुयुरिति।

उत्तरप्रदेशशिक्षामन्त्रिणां मान्यानां श्रीसम्पूर्णानन्दमहाभागानां प्रयत्नेन १९५०ईशवीय-वर्षस्य मईमासस्य प्रथमद्वितीयदिनाङ्कयोर्वाराणस्यां राजकीयसंस्कृतमहाविद्यालयभवनेऽखिल-भारतीयसंस्कृतपरीक्षासन्तुलनपरिषदोऽधिवेशनमजनि। तत्र संजाता निर्णयाः सुषमायाः पञ्चम-वर्षतृतीयाङ्के सम्पादकीय उट्टङ्किताश्ते तत एवावलोकनीयाः।

तान् निर्णयाननुरुद्ध्यैवोत्तरप्रदेशीयशासनेन काशिकराजकीयमहाविद्यालयस्य विभिन्न-परीक्षाणां पाठ्यक्रमे आवश्यकानि यानि संशोधनानि परिवर्द्धनानि च स्वीकृतानि तानि सर्वेषां सुपरिचितान्येव। तत्र हि संस्कृतसाहित्यस्य पूर्ववदेव संरक्षणं कृतमथ च नूतनविषयाणामपि समावेशो यथायथं कृतः। तत्र प्रथमायाः षट्सु पत्रेषु संस्कृतसाहित्यस्य सप्तमाष्टमनवमपत्रेषु च नूतनानामितिहासभूगोलगणितकलाकौशलादिविषयाणां समावेशः कृतः। मध्यमायाः पूर्वोत्तर-मध्यमानामकौ द्वौ विभागौ कृतौ, 'क-ख'-विभागयोश्च पाठ्यक्रमो विभक्तः। तत्र कविभागे संस्कृतसाहित्यस्य खविभागे च इंग्लिशादिवैदेशिकभाषया सह राजशास्त्र-अर्थशास्त्र-इतिहास-हिन्दी-गणित-विज्ञान-प्राकृतविज्ञान-मनुष्यविकास-धर्म-नैतिकता-क्रीडादीनां नूतनविषयाणां
 समावेशः कृतः। वर्षद्वयसाध्यायां शास्त्रिपरीक्षायामपि मध्यमावदेव 'क-ख' विभागयोः पाठ्य-क्रमो विभक्तः। तत्र कविभागे संस्कृतसाहित्यस्य विभिन्नानां शाखानाम्, खविभागे चेतिहास-

वार्ताशास्त्र ( अर्थशास्त्र )-राजनीति-प्राचीनभारतीयेतिहास-संस्कृति-हिन्दी-शिक्षणशास्त्र-इंग्लिशादिविषयाणां समावेशो वर्तते। सर्वास्वासु परीक्षासु सामान्यविषयाणामपि यथायथं समावेशोऽस्त्येव।

इत्थं संस्कृतपरीक्षासन्तुलनपरिषदो निर्णयानभिलक्ष्य संस्कृतपरीक्षापाठ्यक्रमे समयोचितं परिवर्तनं विहितम्। एवंविधपरिवर्तनस्य प्रयोजनमेतदेवास्ति यदस्माकं संस्कृतच्छात्राणां शास्त्रज्ञानेन सह लोकव्यवहारोपयोगिविषयाणामप्यावश्यकं ज्ञानं भवेदिति। तच्च नूतनेनानेन पाठ्यक्रमेण बाढं सिद्ध्यति। पाठ्यक्रमे सन्तुलिते संस्कृतपरीक्षा राजकीयकार्येषु मान्यतां लभेरन्निति उत्तरप्रदेशीयशासनेन प्रतिश्रुतमासीत्। तदनुगुणमेव नूतनपाठ्यक्रममवलम्ब्य संजातानां प्रथमादिपरीक्षाणां परीक्षाफलप्रकाशानन्तरमुपर्युक्ता मान्यताघोषणा संजाता।

राजकीययाऽनया घोषणया संस्कृतसमाजस्य महानुपकारः संजातः। जीविकाया उन्नतेश्च भूयांसि द्वाराणि पूर्वं संस्कृतज्ञानां कृते पिहितान्यासन्। संस्कृतज्ञा विद्वांसः पाठशालास्वेव शरणं लभन्ते। पाठशालानां परिसीमितत्वादन्ये आचार्योत्तीर्णाः स्नातका ग्रामेषु कृषिकर्मणा कथावार्ताप्रसङ्गेन कर्मकाण्डादिना फलितज्यौतिषेण च स्वजीविकानिर्वाहं यथाकथंचित्कुर्वन्ति। केचिच्च आयुर्वेदविद्यामधीत्य चिकित्साकार्यं कुर्वाणाः स्वकीयं जीवनं यापयन्ति। परन्तु सर्वेषामेषां दीना हीना च दशा वरीवर्त्ति। घोषणयाऽनयाऽचिरात्समयो नूनं परिणमिष्यति। संभाव्यते साम्प्रतं संस्कृतज्ञा विद्वांसः पूर्ववदेव राजनीतिज्ञाः, शासकाः, प्राड्विवाकाः, अन्तरिक्षविदः, राजदूताः, किं बहुना; महामात्याश्चापि भविष्यन्ति।

घोषणयानया संस्कृतपरीक्षाणामितरपरीक्षाभिः साम्यमापादितम्। अधुना इंग्लिशभाषया सह शास्त्रिपरीक्षोत्तीर्णाश्छात्राः 'बी०ए०' परीक्षोत्तीर्णच्छात्रवत् 'एम०ए०' परीक्षायां प्रवेशमवाप्स्यन्तीत्याशास्यते, तद्वदेव च प्रतियोगितापरीक्षास्वपि। इमाः सुविधास्त्वस्माभिर्लब्धा एव, किन्त्वाभिः सहैव संस्कृतसमाजे महान् कर्तव्यभारोऽपि समायातः—आसां सुविधानां समुचितमुपयोगं कर्तुं वयं समर्था भवेमेति। यस्मिन् कार्ये संस्कृतस्नातका नियुक्ता भवेयुस्तद् योग्यतया निर्वोढुम्, प्रतियोगितादिषु साफल्यं चाधिगन्तुं समर्था भवेयुरित्यस्माकं हार्दिकोऽभिलाषः।

साम्प्रतमुत्तरप्रदेशे चतुर्दशशतपरिमिताः संस्कृतपाठशालाः सन्ति। उत्तरप्रदेशतो बहिरपि काशिकमहाविद्यालयपरीक्षया सम्बद्धाः शतत्रयपरिमिताः पाठशाला विद्यन्ते। एतासु 

साम्प्रतमुत्तरप्रदेशे रामनगरटेहरीगढवालयोः समावेशात्तत्रत्याभिः पाठशालाभिः सह नवसंख्याका पाठशाला राजकीयाः, ३८० संख्याकाश्च पाठशाला लब्धराजकीयसहायाः सन्ति। शिष्टाः सर्वाः पाठशालाः लब्धमठमन्दिरधनिकसहाया वर्तन्ते। उत्तरप्रदेशतो बहिःस्थिताश्च सर्वाः पाठशालाः प्रायः स्वतन्त्रा एव सन्ति। नहि ताभ्यः किमपि राजकीयं साहाय्यं दीयते। स्थानिकसंस्थाभिर्यत्किमपि साहाय्यं लभ्यत इति तदन्यत्। एवं च पाठशालासु राजकीयं साहाय्यम् 'शाकाय वा स्याल्लवणाय वा स्यात्' इत्याभाणकं चरितार्थयति। अत एव पाठशालानां दीना दशा वर्तते। प्रायः शते पञ्चाशत्संख्याकाः पाठशाला एकाध्यापकाः सन्ति।

उत्तरप्रदेशीयशासनेन संस्कृतपाठशालाभ्यो लक्षत्रयपरिमितं वार्षिकं साहाय्यं दीयते। कस्यै अपि पाठशालायै चतुस्सहस्रतोऽधिकं वार्षिकं साहाय्यं न दीयते। एतावत्साहाय्यं च यत्र दशाधिका अध्यापकाः सन्ति तत्रैव वितीर्यते। अत एव श्रेष्ठतमानामपि पाठशालानां प्रधानाध्यापकस्य मासिकं वेतनं सार्द्धशतरूप्यकेभ्योऽधिकं नास्ति। अधिकांशपाठशालीयप्रधानाध्यापकाः शतरूप्यकैरेव स्वजीवनं यापयन्ति। साधारणपाठशालीयाध्यापकानां तु कथैव का? संस्कृताध्यापकाः प्रायः पञ्चविंशतिरूप्यकैरेवाचार्यपर्यन्तमध्यापयन्ति। यत्र प्राथमिक—(प्राइमरी) पाठशालाशिक्षकाणां वेतनं पञ्चाशद्रूप्यकपरिमितम्, साम्प्रतं राजकीयकार्यालयेषु निम्नकर्मचारिणोऽपि तावद् वेतनं प्राप्नुवन्ति; तत्र संस्कृतपण्डितानामेषा हीना दशेत्यहो विधिविडम्बनम्।

सर्वासु शिक्षासंस्थास्वध्यापकानां निश्चितो वेतनक्रमो विद्यते। किन्तु संस्कृतपाठशालास्वद्यावधि कोऽपि निश्चितो वेतनक्रमो नास्ति। स्वतन्त्रे भारते संस्कृतज्ञानामियं दुरवस्था क्षिप्रं शोधनीया। एतेषामध्यापकानां कृते शीघ्रमुचितो वेतनक्रमः सर्वासु पाठशालासु प्रचालयितव्यः। निश्चितं वेतनक्रममन्तरा नवीनपाठ्यक्रमस्य सफलता न संभवति। वेतनक्रमनिश्चयश्चार्थसाध्यः। संस्कृतविद्यालयेषु च धनस्य कार्श्यं वर्तत इति सर्वे जानन्ति। संस्कृतपाठशालासु च्छात्रैः शुल्कं न दीयते; प्रत्युत निर्धनेभ्योऽध्येतृभ्यो भरणपोषणार्थं छात्रवृत्तिर्दीयते। अत इदमावश्यकं यद्राज्येन पाठशालाभ्यो विपुलं धनसाहाय्यं प्रदीयेत।

इदानीं नूतनपाठ्यक्रमे बहव आधुनिका विषयाः समाविष्टा वर्तन्ते। तान् विषयानध्यापयितुमेकाधिका अध्यापका अपेक्षिताः सन्ति। प्रथमपरीक्षार्थमपि न्यूनान्न्यूनं त्रयाणामध्यापकानामावश्यकता विद्यते। नवीनविषयाध्यापकाश्च नहि संस्कृताध्यापकवत्पञ्चविंशतिरूप्यकै-

रुपलभ्याः। एवं च प्रथमामध्यमाशास्त्रिपरीक्षाणां यो नूतनः पाठ्यक्रमो निर्धारितस्तं संचालयितुं तदर्थं कृतां राजकीयमान्यतां सफलयितुं च सम्प्रत्युत्तरप्रदेशेऽपि शते पञ्चैव पाठशालाः क्षमाः। शिष्टाः पञ्चनवतिपाठशाला न तं सफलयितुं योग्याः। वर्तमाने समये संस्कृतच्छात्राणां योगक्षेमनिर्वाहार्थं नूतनविषयाणां निर्धारणमपि युक्तमेव। अतः प्राथमिके संक्रमणकाले प्राचीनप्रणाल्या प्रचलिताः संस्कृतपाठशाला अभिनवां पाठपद्धतिं यथा सुखेनानुसरेयुस्तथा राज्येन प्रयतितव्यमिति।

नवीने पाठ्यक्रमे प्राचीना विषयाः सन्त्येव। अन्येषां नूतनानां विषयाणामपि समावेशस्तत्रैव कृतः। एष च संस्कृतच्छात्राणां शिरसि महान् भार इति केचित्कथयन्ति। तन्न शोभनम्। अधुना हि शते पञ्चाशद्विद्यार्थिन इतोऽधिका वा संस्कृतपरीक्षाभिः सह आंग्लपरीक्षा आयुर्वेदपरीक्षा हिन्दीसाहित्यसंमेलनपरीक्षाश्च ददति। अस्य कारणं च जीविकाप्रश्न एव। न ह्यांग्लपरीक्षार्थिभिस्तथा क्रियते-क्रियते चेत् स्वल्पैरेव। एकदैव बहूनां परीक्षाणां दाने यः परिश्रमो भवति ततोऽल्पीयानेव श्रमोऽपेक्षितो नूतनपद्धत्या संस्कृतपरीक्षादाने। अनया पद्धत्या यदा जीविकाप्रश्नः समाधानमेष्यति तदा संस्कृतच्छात्रा अपि नहि बह्वीनां परीक्षाणां कृते प्रयतिष्यन्ते। एवं च नवीनपाठ्यक्रमेण संस्कृतच्छात्राणां बहुपरीक्षाव्याधिर्निस्सारितो भविष्यति। तथा च नवीनः पाठ्यक्रमस्तेषां न भारभूतोऽपि तु श्लाघ्य एव।

एवमेव केचित् कथयन्ति यन्नवीनपाठ्यक्रमेण प्रकृष्टपाण्डित्यस्य ह्रासो भविष्यतीति। इयमापत्तिरपि साररहिता। द्वित्राणामाधुनिकविषयाणां समावेशेन संस्कृतविषयाणामुत्कृष्टं पाण्डित्यं न संभवतीति कथनं तु प्राचीनेतिवृत्तस्याज्ञानतामेव सूचयति। अस्माकं पुरातना आचार्या अनेकविषयाणामुद्भटा विद्वांस आसन्निति नाविदितं प्रेक्षावताम्।

## पारसीकदेशे संस्कृताध्ययनस्यापूर्वः समारम्भः

विगतश्रावणमासे पारसीकदेशीयतेहरानविश्वविद्यालयस्य संस्कृतप्राध्यापका डाक्टर-कुन्हनराजामहोदयाः काशीविश्वविद्यालये संस्कृतिकलासम्बन्धिनीं स्वकीयां व्याख्यानमालां प्रसारयितुं तदानीन्तनैः कुलपतिमहोदयैः श्रीगोविन्दमालवीयैः समाहूता आसन्। विगतेऽब्दे पारसीकशासनेन स्वीयतेहरानविश्वविद्यालये संस्कृताध्यापनार्थमेकस्य संस्कृतप्राध्यापकस्य कृते २८१ भारतीयशासकाः प्रार्थिताः, भारतीयशासनेन चेमे महानुभावास्तत्र प्रेषिताः। इमे महानुभावाः

पूर्वमत्र मद्रासविश्वविद्यालये संस्कृतप्राध्यापकाः, अड्यारसंस्कृतग्रन्थमालाया बीकानेरनगरस्थानूपसंस्कृतग्रन्थमालायाश्च संपादका आसन्। अखिलभारतीयसंस्कृतसंमेलनेन काशीस्थपण्डितमण्डल्याः परिचयसम्पादनार्थमिमे महानुभावाः स्वकीये कार्यालये (श्रीसत्यनारायणकविराजमहोदयानां भवने) आमन्त्रिताः। तत्र च तैः 'ईरान'-देशे संस्कृतभाषायाः स्थितिविषये इतिवृत्तात्मकः संक्षिप्तः परिचयः स्वीयललितगीर्वाणवाण्याऽदायि—

"पारसीकदेशे आंग्लभाषायाः प्रचारो नास्ति। तत्र पारसीकभाषया फ्रेंचभाषया चाध्ययनाध्यापनादिकं सर्वं कार्यजातं प्रचलति। अस्माकं भारतीयाया देवनागर्या लिप्याः कस्यचिदपि परिचयो नास्ति। सर्वप्रथममहं तत्रत्यान् 'बी०ए०-एम०ए०'-कक्षास्थितान् विद्यार्थिनो वर्णमालामपाठयम्। अधुनाऽहं तान् रघुवंशादिकाव्यानि पाठयामि। अल्पीयस्येव काले विंशतिसंख्याकाश्छात्रास्तत्र संस्कृताध्ययने सोत्साहं प्रवृत्ताः" इति।

पूर्वं यत्र बृहत्तरभारतस्य साम्राज्यसीमाशङ्कुर्निखात आसीत्, यत्रत्यधर्मग्रन्थस्य 'जेन्द-अवेस्ता'-नामकस्य भाषा ऋग्वेदभाषयाऽत्यन्तं सादृश्यमावहति; तत्राधुनाऽस्माकं लिपेरपि कोऽपि परिचितो नास्तीत्यहो विचित्रा दैवगतिः। पश्यत 'जेन्द-अवेस्ता'-वचनम्—

[1]हावनिम् आ रतुम् आ<br>
हओमो उपैत् जरथुश्त्रम्,<br>
आत्रम् पइरि-यओजदथन्तम्,<br>
गाथास्-च स्रावयन्तम्।<br>
आ-दिम् परसत् (जरथुश्त्रो) को नर् अहि<br>
यिम् अजम् वीस्पहे अंघउस्<br>
अस्त्वतो स्रएश्टम् दादरस।

---

[1] "सवनिम् आ ऋतुम् आ, सोमो उपैद् जरथुष्ट्रम्। अग्निम् परि-योस्-दधन्तम्, गाथाश्च [अपि] श्रावयन्तम्॥ आ तम् पृच्छत् (जरथुष्ट्रः) को नर् असि, यम् अहम् विश्वस्य असोः। अस्थिवतः श्रेष्ठम् ददर्श॥" इति संस्कृतच्छाया।

एतदस्माकं प्राचीनया भाषया कियत्साम्यमावहति। पश्चिम-एशियास्थः 'अल-अमर्ना'-ग्रामे उपलब्धे आचार्यकिक्कुलिरचितहयशास्त्रपुस्तके—यस्य रचनाकाल ईशातश्चतुर्दशशताब्द्याः पूर्वं विद्यते—एकावर्तनद्व्यावर्तनत्र्यावर्तनादिसंस्कृतशब्दानां प्रयोगो विद्यते। एवमेवाष्टाध्याय्यां निर्दिष्टा दार्विकाकूलाः शालयः, कापिशायनं मधु, पाण्डुकम्बलादयश्च एष्वेव देशेषु भवन्ति स्म। सहस्राब्दीतोऽस्माकं सम्बन्ध एभ्यो देशेभ्यो विच्छिन्नः। जावासुमात्राबालिबोर्नियो-श्यामादिदेशेषु यत्रास्माकं पूर्वजा एव राज्यमस्थापयंस्तत्रैव न्यवसंश्च तेषां सन्ततिभिरस्माकं बान्धवैश्चास्माकं सम्बन्धो विच्छिन्नः। अस्माकं संस्कृतिरस्माकं शब्दसम्पत्तिरद्यापि तत्राक्षुण्णा वरीवर्तते। तत्रत्यासु भाषासु संस्कृतशब्दानां बाहुल्यं विद्यते। रामायणमहाभारतकथानामपि भारतसदृश एव प्रचारस्तत्राप्यस्ति। अङ्कोरवटबोरोबुदुरसदृशानि बृहत्तमानि शैववैष्णवमन्दिराणि चाद्यापि तत्र सन्ति, येषां तुलनां भारतस्थानि मन्दिराण्यपि कर्तुं न प्रभवन्ति। श्यामदेशे राज्याभिषेकसमयेऽधुनापि शतपथब्राह्मणमन्त्रैः पुरोहिता अभिषेकं कुर्वन्ति। तत्रत्याः पुरोहिता अद्यापि यज्ञोपवीतं धारयन्ति। एवं सत्यप्यस्माभिः सह परस्परादानप्रदानाभावात् सत्यपि साम्ये वैषम्यवारिधिः समायातः। समयोऽयं संप्राप्तो यद्वयं स्वप्रातिवेशिकदेशैः स्वसंस्कृति-सम्बन्धं स्थापयामः, तेषां प्राचीननवीनसाहित्यसंस्कृत्योरध्ययनं कुर्मः, बहोः कालाद् विस्मृतान् बन्धून् सभाजयामः, उभयोर्विस्मृतस्य ज्ञानराशेः पुनरादानप्रदानं भवतु, अस्माकं प्राचीनं साहित्यं तत्र विविधरूपैः सुरक्षितं तिष्ठति तदन्वेषयामः। श्रीकुन्दनराजामहोदयानामेतदीरानगमनं तस्य भाविसम्बन्धस्य संसूचकम्। अस्माभिः स्वप्रातिवेशिकेष्वन्येषु देशेष्वपि संस्कृताध्ययनाध्यापनप्रवृत्तिर्जागरणीया।

## प्राच्यविद्यामहासंमेलनम्

विगत-अक्टूबरमासस्य तृतीयचतुर्थपञ्चमदिनाङ्केषु उत्तरप्रदेशराजधान्यां लक्ष्मणपुर्यां तत्रत्यविश्वविद्यालयेऽखिलभारतीयप्राच्यविद्यामहासंमेलनस्य षोडशाधिवेशनमभूत्। अस्य संमेलनस्य प्रधानाध्यक्षा मद्रासविश्वविद्यालयस्येतिहासपुरातत्त्वविभागस्य भूतपूर्वप्राध्यापकाः श्रीके.ए.नीलकण्ठशास्त्रिमहोदयाः, स्वागताध्यक्षाश्च आचार्यनरेन्द्रदेवमहाभागा आसन्। संमेलनस्योद्घाटनमुत्तरप्रदेशप्रधानमन्त्रिभिः श्रीगोविन्दवल्लभपन्तमहानुभावैः कृतम्। देशस्य विभिन्नेभ्यो भागेभ्यः पञ्चशताधिका विदेशीयाश्च कतिपये प्रतिनिधयोऽत्र समवेता आसन्।

प्रथमे दिवसे उद्घाटनभाषणस्वागतभाषणानन्तरं प्रधानाध्यक्षाणां श्रीनीलकण्ठशास्त्रिणां सारगर्भितं भाषणमभूत्। ततोऽधिवेशनं त्रयोदशसु स्थायिशाखासु नवीनयोः 'हिन्दी-उर्दू'-नामिकयोर्द्वयोः शाखयोश्च विभक्तम्। स्थायिशाखानाम्—(१) वैदिक. (२) ईरानियन. (३) संस्कृत. (४) मुस्लिमसंस्कृति. (५) अरबी-फारसी. (६) पाली-बौद्धधर्म. (७) प्राकृत-जैनधर्म. (८) इतिहास. (९) पुरातत्त्व. (१०) भारतीयभाषा. (११) द्रविडसंस्कृति. (१२) धर्म-दर्शन. (१३) व्यावहारिकविज्ञान-ललितकला. इति नामानि। विभिन्नानां शाखानां विभिन्नाः सभापतयो मन्त्रिणश्चासन्। तत्र विभागीयसंमेलनेषु तत्तत्सभापतीनामन्येषां च विदुषां भाषणानि संजातानि, द्वे व्याख्याने च चलचित्रप्रदर्शनपूर्वके संजाते। महासंमेलने च द्वे विवाद-गोष्ठ्यौ संजाते, अनेके प्रस्तावाश्च स्वीकृताः। रात्रौ संस्कृतहिन्दीनाटकयोः संगीतनृत्ययोश्च सांस्कृतिकं मनोरञ्जकं चायोजनमासीत्। विश्वविद्यालयपुस्तकालये हस्तलिखितपुस्तकानां चित्राणां च प्रदर्शनं कृतम्। अस्मिन्नवसरे महाधिवेशनस्य स्थानीयप्रबन्धकैः प्रतिनिधिभिः प्रेषितानां द्विशताधिकानां निबन्धानां स्वरूपपरिचायकमेकं पुस्तकमपि प्रकाशितम्। अन्ते च महासंमेलनेन 'सप्तदशाधिवेशनं १९५३ ईशवीयेऽहमदाबादनगरे भवतु' इति गुजरातविद्या-सभाया आमन्त्रणमङ्गीकृतम्।

भारतवर्षे ज्ञानविज्ञानयोर्विभिन्नशाखानां प्रातिनिध्यं कुर्वतां विदुषामेतादृशः समवायो न क्वाप्यन्यत्र दृश्यते। सररामकृष्णगोपालभाण्डारकरमहोदयानामपूर्वोद्योगपरिणामभूतमिदं महा-संमेलनम्। अस्य प्रथमाधिवेशनं १९१९ ईशवीये पुण्यपत्तननगर एव भाण्डारकरशोधसंस्थानस्य तत्त्वावधाने सर आर.जी.भाण्डारकरमहोदयानां साभापत्ये सम्पन्नमभूत्। तदनु कलकत्ता-मद्रास-इलाहाबाद-लाहौर-पटना-बड़ौदा-मैसूर-त्रिवेन्द्रम्-तिरुपति-हैदराबाद (दक्षिण)-बनारस-नागपुर-दरभङ्गा-बम्बईनगरेषु क्रमेण प्रो.सिलवेन लेवी-म.म.डा.गंगानाथझा-शम्सउल उलेमा डा.जे.जे.मोदी-म.म.डा.हरप्रसादशास्त्रि-रा.ब.हीरालालजी-श्रीके.पी.जायसवाल-डा.एस.कृष्ण-स्वामी आयंगर-डा.एफ.डब्ल्यू थामस-पं०मदनमोहनमालवीय-श्रीगुलामयाजदानी-डा.एस.के. बेलवलकर-म.म.डा.पी.वी.काणे-डा.आर सी.मजूमदार-डा.एस.के. डेमहोदयानां साभापत्ये द्वितीयादिपञ्चदशपर्यन्तानि महाधिवेशनानि संजातानि। प्रत्येकस्मिन्नधिवेशने द्विशताधिकाः प्रतिनिधयः समवेता अभूवन्। अद्यावधि त्रिसहस्रपरिमिता निबन्धा अत्र पठिताः। एषु श्रेष्ठतमा निबन्धाः संमेलनकार्यविवरणग्रन्थे प्रकाशिता विद्यन्ते।

६ जुलाई १९१७ ईशवीये वर्षे सर आर. जी. भाण्डारकरमहोदयानामशीतितमजन्मतिथौ पुण्यपत्तने भाण्डारकरशोधसंस्थानस्य स्थापना समजनि। तस्या एव संस्थायाः समुद्योगेनास्य महासंमेलनस्य प्रारम्भोऽभूत्। अत एवास्य केन्द्रीयकार्यालयः पुण्यपत्तन एव वर्तते। तस्या एव संस्थाया मन्त्री चास्य महासंमेलनस्यापि स्थायी मन्त्री भवति। अस्य महासंमेलनस्य द्वयोर्द्वयोर्वर्षयोरन्तरे महाधिवेशनं संजायते। प्रत्येकाधिवेशनस्य कार्यविवरणं तत्र पठितानां निबन्धानां च प्रकाशनं पुस्तकाकारेण भवति।

अष्टादशशताब्द्याः समाप्तित एव यूरोपीयदेशेषु संस्कृतभाषाया अध्ययनारम्भः संजातः। ऊनविंशशताब्द्या आरम्भे तत्र सर्वविद्याविदुषां महासंमेलनस्यैकस्यावश्यकतानुभूता। किन्तु १८७३ ईशवीयतः पूर्वं सा कार्यरूपेण परिणता नाभूत्। तत्र सर्वप्रथमं १८७३ वर्षे पेरिसनगरे 'अन्ताराष्ट्रियप्राच्यभाषावित् कांग्रेस'-नामिकायाः संस्थाया अधिवेशनमभूत्। तत्पश्चाद् लंदनादिषु यूरोपीयनगरेष्वस्या विभिन्नान्यधिवेशनानि संजातानि येषु पं०शङ्करपाण्डुरङ्ग-सर आर. जी. भाण्डारकर–जे.जे.मोदी–के.वी.पाठकप्रभृतयो भारतीया विद्वांसोऽपि संमिलिताः। तैर्भारतवर्षेऽप्येतादृश्याः संस्थाया आवश्यकताऽन्वभावि, किन्तु ते तदानीं तत्र सफला नाभूवन्। १९०८ ईशवीये वर्षे हवाईद्वीपे 'यूरोपीय कांग्रेस'-संस्थाया एव संक्षिप्तमेकमधिवेशनं संजातम्, यत्र चीनजापानभारतदेशस्था विद्वांसः समवेता आसन्। एतदनन्तरमेव जुलाई १९११ वर्षे बटलरमहोदयेन शिमलानगरे प्राच्यभाषाविद्वांसः समाहूताः। यत्र डा०वोगेलमहाशयेन यूरोपवदेवात्रापि 'प्राच्यभाषा कांग्रेस' संस्थाया आवश्यकतामभिलक्ष्य सुविस्तृतं निरूपणमकारि। एषु विषयेषु तत्र विचारः संजातः—

(१) भारते एकस्याः केन्द्रीयानुसन्धानशालायाः स्थापना।

(२) भारतस्य विभिन्नभागेषु प्राच्यभाषाविदां विदुषां सामयिकं संमेलनं च। अस्य कार्यपरिधौ—

(क) भारतीयभाषाविद्भिः कृतानामन्वेषणकार्याणां समालोचनम्। यूरोप-अमेरिकादिदेशेषु संजातानां तथाविधानामेव कार्याणां तुलनात्मकमध्ययनं च।

(ख) सहकारितासिद्धान्तमवलम्ब्याखिलभारतीयप्राच्यविद्याकार्याणां समुन्नयनमिति।

तत्पश्चादेव विश्वव्यापिनः प्रथममहायुद्धस्य प्रारम्भान्न किमपि क्रियात्मकं रूपं गृहीतं तेन संमेलनेन। 

इत्थं सत्यामपि प्रयत्नसन्ततौ यत्कार्यं भारतशासनेन प्रारब्धुं नाशकि तदेव भाण्डारकरमहोदयानामन्येषां च विदुषां प्रयत्नेन प्रारब्धमभूत्। अद्यास्याः संस्थायाः स्थापनाया द्वात्रिंशद्वर्षाणि व्यतीतानि। भारतीयानां वैदेशिकानां च विदुषां सहयोगेनैषा प्रतिदिनमुन्नतिपथमारोहति। प्रारम्भावस्थायामेवानया संस्थया महाभारतस्य सर्वाङ्गपूर्णसंस्करणस्य कार्यं प्रारब्धम्। एतदर्थं देशस्य विभिन्नेभ्यो भागेभ्यो नेपालादिदेशेभ्यश्च प्राचीनतमा हस्तलेखाः संगृहीताः। पुण्यपत्तनस्थे दक्षिण ( डेक्कन ) महाविद्यालये ऐतिहासिकाधारमङ्गीकृत्य प्रचलिते बृहत्तमसंस्कृतविश्वकोषरचनाकार्ये बहु साहाय्यं प्रदत्तमनया संस्थया। अस्या एव प्रेरणया आफ्रेक्टरचिताया बृहत्सूच्याः संशोधनपरिवर्धनकार्यं प्रारब्धं मद्रासविश्वविद्यालयेन, यस्य प्रथमो भागः १९४९ ईशवीये प्रकाशितः। चित्रकलामूर्त्तिकलापुरातत्त्वसम्बन्धिन्या नेपालतिब्बतदेशयोः स्थितायाः सामग्र्या एकत्रीकरणार्थमपि प्रयतितम्, तत्र बहु साफल्यमपि लब्धम्। इत्थं प्राच्यभाषाणां विशेषतः संस्कृतस्य समुन्नत्यै अहर्निशं प्रयतमानैषा संस्था दरीदृश्यते। अत्र संस्कृतपण्डितानां सहयोगोऽल्पीयानेव विद्यते। तेन सहयोगेन भूयसा भवितव्यमित्येतदेव प्रार्थ्य विरमामः।

## मिथिलामगधविद्यापीठयोः स्थापना

विगतनवम्बरमासे विहारराज्ये प्राचीननालन्दामहाविद्यालयसमीपे मगधविद्यापीठस्य मिथिलायां दरभङ्गानगर्यां संस्कृतविद्यापीठस्य च समुद्घाटनं भारतीयसंस्कृतिसभ्यतयोर्मूर्तिस्वरूपैरस्माकमभिनवस्य गणतन्त्रस्य प्रथमराष्ट्रपतिभिर्महामान्यैः श्रीराजेन्द्रप्रसादमहाभागैरनुष्ठितम्। तत्र मगधविद्यापीठे पालिप्राकृतवाङ्मयस्य, बौद्धदर्शनस्य, बौद्धसंस्कृतिसम्बद्धेष्वस्माकं प्रातिवेशिकेषु लङ्काब्रह्मदेशतिब्बतचीनादिदेशेषु प्रचलितानां भाषाणां तत्रत्यसाहित्यस्य चाध्ययनस्य गवेषणायाश्च व्यवस्था कृता। अस्मिन् विद्यापीठे प्रथमं देशस्था विदेशस्थाश्चाष्टचत्वारिंशत्परिमिताश्छात्राः प्रवेशं वृत्तिं च प्राप्स्यन्ति। बौद्धवाङ्मये परमनिष्णाता विदेशीया विद्वांसोऽप्यध्यापनं गवेषणाकार्यसंचालनं च विधास्यन्ति। मिथिलासंस्कृतविद्यापीठे संस्कृतसाहित्यस्य विभिन्नानां शाखानामध्ययनाध्यापनं गवेषणाकार्यं च प्रचलिष्यति। अस्मिन् शतद्वयपरिमिताश्छात्राः प्रवेशं यथायथं वृत्तिं च लप्स्यन्ते। विदेशीयभाषासु संस्कृतभाषायां च निष्णाता मनीषिणो विशुद्धसंस्कृतज्ञविद्वांसश्चाध्यापनकार्यं गवेषणाकार्यं च संचालयिष्यन्ति। अनयोर्विद्यापीठयोरुच्चशिक्षादीक्षिता एव च्छात्राः प्रवेशमाप्नुयुः, सर्वो व्ययभारश्च विहारराज्यशासनेन वोढव्यः।

युगानुरूपोऽयं बिहारशासनस्योपक्रमः। एशियामहाखण्डे विकीर्णान् देशमणीनेकत्र ग्रथयितुं संस्कृतपालिप्राकृतानां तत्तद्देशस्य भाषाणां च तुलनात्मकमध्ययनसूत्रमेव क्षमम्। एशियामहाखण्डस्य प्रत्येकेषु देशेषु भारतीयसंस्कृतिसाहित्ययोरवशेषा उपलभ्यन्ते। तेषां सत्यं सुस्पष्टं च रूपं तदैव प्रकाशमेष्यति यदा भारतीयभाषाभिः सह तत्तद्देशानां प्राचीनार्वाचीनेतिहाससंस्कृतिभाषाणामध्ययनं कृतं भवेत्। दक्षिणपूर्व-एशियामहाद्वीपैः सह भारतस्य प्रगाढः सम्बन्धोऽस्त्येव, किन्तु पाणिनिसमये तत्पश्चादपि च कम्बोजगान्धारादिदेशा अपि भारतस्यैव भागा आसन्। एषां देशानामाधुनिक्यां भाषायामपि संस्कृतस्य प्रभावः सुस्पष्टतया प्रतीयते। एनान् देशानपि तस्यामेव मालायामोतप्रोतीकर्तुं तत्तद्देशस्थभाषाणामप्यध्ययनपरिशीलनयोरस्त्यावश्यकता। भारतीयगणतन्त्रमहामात्येन महामान्यश्रीजवाहरलालनेहरुमहाभागेन भारतस्येतिवृत्तं वर्णयता कथितम्—"अमूल्यो हस्तलिखितग्रन्थराशिरस्माकं राष्ट्रेऽधुनाप्युपेक्षितदशायामितस्ततः पतित उपेक्षितश्च विद्यते। स्वातन्त्र्यवेलायां समायातायां यान्यभीष्टान्यस्माकं भविष्यन्ति तेष्वस्याऽमूल्यग्रन्थराशेरुद्धारोऽपि प्रधानतमं कार्यम्" इति। अधुना स एव समयः समायातः। यस्य मार्गस्य दिङ्निर्देशः प्रधानमन्त्रिणा कृतस्तेन पथा राज्यशासनानि सुदूरं कृतयात्राणि सन्ति, किन्तु भारतीयकेन्द्रीयशासनमधुनाऽत्र मौनमेवालम्बते। अस्तु, बिहारशासनस्यैषां प्रयत्नानां वयं सोत्साहं स्वागतं कुर्मः, भगवन्तं श्रीविश्वेशं च प्रार्थयामहे—कुशलास्तेषां पन्थानः सन्त्विति।

---

# विविधम्

## काशिकराजकीयसंस्कृतमहाविद्यालयाध्यापकानां प्राचीनं [1]निर्णयपत्रम्

कस्यचिद्ब्राह्मणस्य चत्वारः पुत्राः पित्रुपरमानन्तरम्पित्रर्ज्जितं महाराज्ञीदत्तं निबन्धं तत्तज्जन्यपुत्रपौत्रादिभोगयोगलेखकं चतुर्द्धा विभज्य गृहीत्वा पृथक् पृथक् स्थिताः। तेष्वेकः पत्नीपुत्ररहितः कन्यान्त्यक्त्वा दिवङ्गगाम। ततस्सा कन्या तत्पितृदाये जाताधिकारा पश्चात्परिणीता सती निरपत्या मृता। ततस्तत्प्राप्तपितृदाये तद्भर्त्ता तत्पितृव्यादयश्च विवदन्ते। तत्र कस्याधिकार इति यवनानीलिखितप्रश्नपत्त्रम्भर्त्रधिकारबोधकव्यवस्थापत्त्रत्रयेण पितृव्याद्यधिकारबोधकव्यवस्थापत्रद्वयेन च सहितं लक्ष्मणपुरराजधानीस्थरजीडण्ड [ रेजीडेन्ट ] साहबप्रेषितमवलोक्य वाराणस्यधिकरणकश्रीमत्कम्पनीसंस्थापितसंस्कृतपाठशालास्थविद्वद्भिरुत्तरन्दीयते।

तथा हि—

उक्तपितृदाये पितृकुलीनसत्त्वे भर्त्तुर्नाधिकारः, किन्तु पितृप्रत्यासन्नानाम्पितृव्यादीनामेव; तादृशकन्यायाः प्रागभावे पितृप्रत्यासन्नानामेवाधिकारप्रसक्तेस्तद्ध्वंसं [सेऽ]पि तेषामेवाधि-

---

१ आंग्लशासकैर्भारते स्वसाम्राज्यस्थापनानुकालमेव दायभागादिविषयकाणामभियोगानां निर्णये काठिन्यमनुभूतम्। एतदर्थं तैः समये समये पण्डितानां साहाय्यं प्रार्थितम्। अनन्तरमेतदर्थमेव वाराणस्यामेकस्याः संस्कृतपाठशालायाः स्थापना विहिता। अत्रत्याध्यापकैरीदृशानां बहूनां विवादानां विषये व्यवस्थापत्रमदायि। तेषु बहूनि निर्णयपत्राणि सरस्वतीभवनपुस्तकालये सुरक्षितानि तिष्ठन्ति। तेष्वेकतमं लक्ष्मणपुरीय-'रेजीडेन्ट'-महाशयप्रेषिताभियोगस्य निर्णयपत्रमेतत्प्रकाश्यते। अत्र संस्कृतपाठशालीयानां नवाध्यापकानां हस्ताक्षराणि सन्ति। तानि च समानलिपिदर्शनादेकेनैव लेखकेनोट्टङ्कितानीति ज्ञायते। अनुमीयते—मूलभूतं निर्णयपत्रम्—यस्मिन् पण्डितानां हस्ताक्षराण्यासन्—लक्ष्मणपुरं प्रेषितम्, तस्यैषा प्रतिलिपिश्चात्र स्थापितेति।

यथासमयमन्यान्यपि निर्णयपत्राणि प्रकाशमेष्यन्ति—सम्पादकः।

कारौचित्यात्। अत एव [1]दायक्रमसंग्रहे—"कुमारी जाताधिकारा पश्चात्परिणीता सत्यविद्यमानपुत्रा यदि म्रियेत तदा तत्पितृदाये सपुत्रायास्सम्भावितपुत्रायाश्च भगिन्यास्तुल्योऽधिकारो न तु तद्भर्त्रादीनाम्, स्त्रीधन एव तेषामधिकारात्" इत्युक्तं सङ्गच्छते। सङ्गच्छते च—[2]'अप्रजस्त्रीधनम्भर्त्तुः' इत्यस्य ब्राह्मादिविवाहनिमित्तकधनविषयकताया व्याख्यानाद्दायभागकृतापि पितृदायत्वेन प्राप्तस्य धनस्य पितृकुलगामित्वमभिमतम्। यद्यपि मिताक्षराकारेण स्त्रीधनं यौगिकमेवाङ्गीकृतन्तथापि 'अप्रजस्त्रीधनम्' इत्यस्य पितृदायातिरिक्तविषये चारितार्थ्येन पितृदायस्थले प्रागभावकालिकप्रसक्ताधिकारिणो ध्वंसेऽप्यधिकारत्यागे मानाभावेन पितृसम्बन्धिसत्ताकालिकपितृदायातिरिक्तविषयकताया एवौचित्यात्। अन्यथा 'अप्रजस्त्रीधनम्' इत्यस्य पिण्डप्रत्यासत्त्याऽऽवश्यकप्राप्तभर्त्रधिकारानुवादकस्योक्तस्थले विधायकत्वकल्पने विधिवैषम्यप्रसङ्गो गौरवञ्च स्यात्। 'शेषेषु[2] पितृगामि तत्' इत्यस्य भर्त्तुः पिण्डप्रत्यासत्तिरस्तीति बोधनद्वारा पिण्डप्रत्यासत्तिप्राप्तस्यैव भर्त्रधिकारस्य बाधकत्वमिति बोधनार्थम् 'अप्रजस्त्री' इत्यस्य पिण्डप्रत्यासत्तिप्राप्तार्थानुवादकत्वं स्पष्टमेव। अत एव आसुरादिविवाहेषु भर्तृतो दायप्राप्तस्य स्त्रीधनस्य न पितृकुलगामिता प्रागभावे सति यस्याधिकारस्तस्यैव ध्वंसेऽप्यधिकार इत्यनेन पितृकुलगामिताबाधात्। न च प्रकृतधने पिण्डप्रत्यासत्त्या भर्त्तुरेवाधिकार इति वाच्यम्; बाधकान्तरसद्भावे पिण्डप्रत्यासत्तेरप्रयोजकत्वात्। अत एव पुत्रसत्त्वेऽपि स्त्रीधने दुहितॄणामेवाधिकार इति सर्वैरेव सिद्धान्तितम्। एवञ्चासुरादिविवाहेषु भर्तृदायप्राप्तस्य भर्तृकुलगामित्ववद् ब्राह्मादिष्वपि पितृदायप्राप्तस्य पितृकुलगामिता निर्बाधैव। अत एव 'ऋक्थम्मृतायाः कन्यायाः' इति बौधायनवचसो[3] मिताक्षराकारमते एतादृशविषयकताकल्पनं युक्तमेव। एतेन 'अप्रजस्त्रीधनम्भर्त्तुः' इत्यस्य यथाश्रुतमिताक्षराकारकृतविवरणाभिप्रायेण प्रकृते भर्त्रधिकारं वर्णयन्तोऽपि

---

१ दायाधिकारक्रमसंग्रहापरनामधेयो जयकृष्णतर्कालङ्कारकृतो धर्मशास्त्रग्रन्थ इति आफ्रेक्टबृहत्सूच्याम्। वस्तुतस्तु जीमूतवाहनकृतदायभागस्य श्रीकृष्णतर्कालङ्कारकृता टीकेयम्, सा चाधुना कलिकातातः प्रकाशिता। अनयोर्ग्रन्थयोर्वङ्गविहारयोर्विशिष्टा मान्यता विद्यते।

२ याज्ञवल्क्यस्मृतौ व्यवहाराध्याये श्लोकः– १४५।

३ याज्ञवल्क्यस्मृतिटीकाकारादिभिर्बौधायननाम्नोद्धृतम्। बौधायनस्मृतौ दायप्रकरणे तु नोपलभ्यत एतद्वचनम्।

निरस्ताः । तत्तज्जन्यपुत्रपौत्रादिविषयकयोगदानमप्येतादृशनिबन्धस्य तादृशपितृकुलगामित्व एवानुकूलमित्यपि ध्येयम् । एवञ्चैतादृशधनस्य पितृकुलगामित्वव्यवस्थापनमेव सम्यगिति । आषाढकृष्णनवम्याम्बुधे लिपिरियम् । संवत् १६१०. ॥

| | |
|---|---|
| ईश्वरदत्त पं० | काशीनाथ शा० |
| हीरानन्द पं० | नारायण शा० |
| उमराव पं० | कालीप्रसाद भ० |
| दुर्गादत्त पं० | गुलज़ार पं० |
| देवदत्त पं० | |

---

# अस्माकमीक्षणम्

## लाक्षासूक्तम्

नागपुरतः श्रीके.एन.दवेमहाशयैः प्रेषिता 'लैक एन्ड दी लैक-इन्सेक्ट इन दी अथर्ववेद'-नामिका षोडशपृष्ठात्मिका लघुपुस्तिकाऽधिगतास्माभिः । अस्यां पुस्तिकायां दवेमहाशयैरथर्ववेदीयलाक्षासूक्तमन्त्रा लाक्षाविषयकाधुनिकमतसमुत्थापनपूर्वकमांग्लभाषायां विशदतया व्याख्याताः ।

अथर्ववेदीयपञ्चमकाण्डस्य पञ्चमं सूक्तं लाक्षासूक्तमिति नाम्नाभिधीयते । तत्र 'रात्री माता नभः पिता' इत्यादयो नव मन्त्राः सन्ति । तेषु लाक्षाया उत्पत्त्यादिविषये, केषु केषु वृक्षेष्वियमुत्पद्यते कीदृशास्तस्या गुणा इत्यादिकं वर्णितमस्ति । तथाहि—"रात्री माता नभः पितार्यमा ते पितामहः । ""अपामसि स्वसा लाक्षे वातो ह्यात्मा बभूव ते । ""सिलाची नाम कानीनोऽजबभ्रु पिता तव"'वृक्षं वृक्षमारोहसि"'भद्रात् प्लक्षान्निस्तिष्ठस्यश्वत्थात् खदिराद्धवात् । भद्रान्न्यग्रोधात्पर्णात् सा न एह्यरुन्धति ॥""यस्त्वा पिबति जीवति त्रायसे त्वम् ।" इत्यादयो मन्त्रा लाक्षाया औषयिकं स्वरूपं सुस्पष्टं वर्णयन्ति ।

अस्माकं वैज्ञानिक्या आयुर्वेदचिकित्सापद्धतेर्मूलान्यथर्ववेद एव पिहितानीति सुविदितमेव। लाक्षोत्पत्तिविषयकांधुनिकभौतिकविज्ञानवादिगवेषणयाऽथर्ववेदीयलाक्षावर्णनस्य तुलनात्मकाध्ययनेनैतत्तथ्यं स्पष्टमेव विचक्षणानां विचारचक्षूंष्युन्मीलयति। श्रीदवेमहाशयानामेषोऽध्यवसाय इमामेव दिशं सूचयति। एतैर्महानुभावैः 'रांची'-स्थ-'नामकुम लैक रिसर्च इंस्टीट्यूट'-नामकसंस्थायामन्वेषणकार्यं कुर्वद्भ्यां श्रीपी. एम. ग्लोवर-ठाकुरप्रतापसिंहनेगीमहाशयाभ्यां प्रणीतौ 'दी लैक कल्टिवेशन इन इण्डिया'-'इम्प्रूव्ड मैथड्स ऑफ लैक कल्टिवेशन'-नामकौ ग्रन्थावाधारीकृत्य लाक्षाया उत्पत्तिः स्त्रीपुंसात्मकैर्लाक्षाकृमिभिः कथं कियति काले कदा भवति? केषु केषु वृक्षेषु लाक्षाया उत्पत्तिरिति विषयो विशदीकृतः। अथर्ववेदीयवर्णनेन तस्य तुलना च कृता।

लाक्षासूक्तस्य सायणाचार्येण व्याख्यानं न कृतम्। डा. ग्रिफिथादिभिः कतिपयैः पाश्चात्यविद्वद्भिर्विनैव भाष्यटीकादिसाहाय्यं स्वातन्त्र्येण लाक्षासूक्तस्य व्याख्यानं यूरोपीयभाषासु कृतम्। एतदेव श्रीरामचन्द्रशर्मभिर्मुरादाबादतः, औंधनगरीतश्च श्रीएस.डी.सातवलेकरमहाशयैर्हिन्दीभाषायामनूदितम्। सर्वाण्यप्येतानि लाक्षासूक्तस्य वास्तविकाभिप्रायप्रकाशनेऽसमर्थान्येव। 'वृक्षं वृक्षमारोहसि' इति मन्त्रे पाश्चात्यविद्वद्भिर्लाक्षा लतारूपेण व्याख्याता।

श्रीदवेमहाशयैः सर्वां सामग्रीं संकलय्य दोषपरिहारपुरस्सरमिमे मन्त्रा व्याख्याता इति प्रशंसनीय एष प्रयत्नः। संजातेऽन्वेषणप्रयत्नेऽस्माकं प्राचीने साहित्येऽनेकानि तथ्यानि मिलिष्यन्ति यैर्नूतनं रहस्यमाविर्भविष्यतीति।

ब्र० व० द्वि०

---

# संस्कृतसमाचाराः

श्रावणकृष्णचतुर्दश्यां बुधवासरे ( १।८।५१ ) सायं सार्द्धषड्वादनवेलायामखिलभारतीयसंस्कृतसंमेलनकार्यालये ( श्रीसत्यनारायणशास्त्रिकविराजमहोदयानां भवने ) तेहरानविश्वविद्यालयस्य संस्कृतप्राध्यापकानां श्रीकुन्दनराजामहोदयानां तत्र संस्कृतभाषायाः स्थितिपरिचायकं संस्कृतभाषामयं प्रवचनं समजायत ।

× × × ×

आश्विनकृष्णतृतीयायां भौमवासरे (१८।९।५१) उत्तरप्रदेशराज्यपालमहोदयैः काशिकराजकीयसंस्कृतमहाविद्यालयस्य प्रथमापरीक्षायाः, पूर्वोत्तरमध्यमयोरांग्लभाषासहितयोः, आंग्लभाषासहितायाः शास्त्रिपरीक्षायाश्च क्रमेण जूनियरहाईस्कूल-हाईस्कूल-इन्टरमीडियट-बी०ए०-परीक्षाणां समकक्षतोद्घोषिता ।

× × × ×

आश्विनकृष्णत्रयोदश्यां शुक्रवासरे (२८।९।५१) उत्तरप्रदेशीयशासनेन कृतायाः काशिकराजकीयसंस्कृतमहाविद्यालयस्य संस्कृतपरीक्षाणां नूतनमान्यताघोषणायाः संमानार्थमथ च स्वकीयहर्षोद्गारप्रकटनपूर्वकं शासकेभ्यो धन्यवाददानार्थं महाविद्यालयभवने काशीस्थानां सर्वेषां विदुषामेका परिषदायोजिता । यत्र वैयाकरणवरश्रीसभापत्युपाध्यायानां म०म०श्रीनारायणशास्त्रिखिस्तेमहाभागानामन्येषां च विदुषां सारगर्भितानि भाषणानि समजायन्त । अन्ते च महाविद्यालयाध्यक्षैः श्रीत्रिभुवनप्रसादोपाध्यायमहाभागैः संस्कृतपरीक्षाणामैतिहासिकसिंहावलोकनात्मकं भाषणं कृतम् ।

× × × ×

१९५१ ईशवीयस्य अक्टूबरमासस्य तृतीयचतुर्थपञ्चमदिनाङ्केषु उत्तरप्रदेशराजधान्यां

लक्ष्मणपुर्यां तत्रत्यविश्वविद्यालयेऽखिलभारतीयप्राच्यविद्यामहासंमेलनस्य षोडशाधिवेशनं मद्रासविश्वविद्यालयस्येतिहासपुरातत्त्वविभागस्य भूतपूर्वप्राध्यापकानां श्रीके.ए.नीलकण्ठशास्त्रिमहो-

दयानां प्रधानाध्यक्षतायामभूत्। संमेलनस्योद्घाटनमुत्तरप्रदेशप्रधानमन्त्रिभिः श्रीगोविन्द-वल्लभपन्तमहोदयैः कृतम्। स्वागताध्यक्षाश्च लक्ष्मणपुरविश्वविद्यालयकुलपतय आचार्यनरेन्द्रदेव-महाभागा आसन्।

× × × ×

कार्तिकशुक्लनवम्यां बुधवासरे (७।११।५१) वारायणसेयामवालसंस्कृतविद्यालयस्य पञ्चमं वार्षिकमधिवेशनं काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीत्रिभुवनप्रसादोपाध्याय-महाभागानां साभापत्ये सम्पन्नम्। तत्र प्रथमं विद्यालयाधिकारिभिः सभापतीनामभिनन्दनं कृतम्, तदनु काशिकराजकीयसंस्कृतमहाविद्यालयस्य नूतनपाठ्यक्रममधिकृत्य विदुषां विचार-विनिमयः प्राचलत्।

× × × ×

कार्तिकपूर्णिमायां भौमवासरे (१३।११।५१) सायं चतुर्वादनवेलायां काशिकराजकीय-संस्कृतमहाविद्यालयभवने आस्ट्रियादेशीयस्य प्रसिद्धबौद्धदर्शनविदुषो डा.बी.एच.गुन्थरमहो-दयस्य साभापत्ये बौद्धसांस्कृतिकसंमेलनमभूत्। प्रारम्भे चीनतिब्बतसिंहलादिभाषासु मनोहराः परीत्तपाठाः संजाताः। तदनु स्वागताध्यक्षाणां श्रीहजारीप्रसादद्विवेदिनां स्वागतभाषणम्, श्रीवासुदेवशरणाग्रवाल-डा.फूजिओशी (जापान) प्रभृतीनां विदुषां श्रीकिचिमा (वर्मा)-श्रीउजागर-श्रीसद्धातिस्स (लंका) प्रभृतीनां भिक्षूणां च भाषणान्यभूवन्। भिक्षुसद्धातिस्सेन स्वकीये भाषणे पश्चिमैशियायामरबलीगवद् दक्षिणपूर्वैशियादेशेषु सांस्कृतिकस्यैकस्य सङ्घटनस्यावश्यकता प्रदर्शिता। अन्ते च बौद्धदर्शनमवलम्ब्य सभापतिमहाभागस्य विद्वत्तापूर्णं भाषणं संजातम्।

× × × ×

१९५१ ईशवीयस्य नवम्बरमासस्य २० दिनाङ्के बिहारराज्ये प्राचीननालन्दामहावि-द्यापीठसमीपे मगधविद्यापीठस्य, २१ दिनाङ्के च मिथिलायां दरभङ्गानगर्यां संस्कृतविद्यापीठस्य समुद्घाटनं भारतीयसंस्कृतिसभ्यतयोः प्रतीकभूतैरस्माकमभिनवस्य गणतन्त्रस्य प्रथमराष्ट्रपतिभि-र्महामान्यैः श्रीराजेन्द्रप्रसादमहाभागैरनुष्ठितम्।



× × × ×

मार्गशीर्षपूर्णिमायां गुरुवासरे ( १३।१२।५१ ) वाराणसेयसंन्यासिसंस्कृतमहाविद्यालयस्यैकचत्वारिंशत्तममधिवेशनं काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीत्रिभुवनप्रसादोपाध्यायमहोदयानां तत्त्वावधाने उत्तरप्रदेशसंस्कृतपाठशालानिरीक्षकाणां श्रीरामनरेशमिश्रमहोदयानां साभापत्ये सुसम्पन्नम् ।

× × × ×

पौषकृष्णामावास्यायां शुक्रवासरे ( २८।१२।५१ ) पूर्वाह्णे एकादशवादनवेलायां संस्कृतमहाविद्यालयभवने शर्मण्यदेशीयस्य श्रीहरमुठफौनग्लासनापमहाशयस्य शर्मण्यदेशे साम्प्रतं संस्कृताध्ययनाध्यापनयोः प्रगतिमभिलक्ष्य आंग्लभाषायां भाषणमभूत् । सायं षड्वादनवेलायां च भारतीयवाद्य-कोलम्बसकृतसमुद्रयात्रा-स्वच्छता-कनाडाजलसेना-इंग्लैंडदेशीयराष्ट्रियशिक्षाप्रदर्शकानां पञ्चानां चलच्चित्राणां प्रदर्शनमभूत् ।

× × × ×

पौषशुक्लनवम्यां शनिवासरे (५।१।५२) सायं सार्द्धचतुर्वादनवेलायां महाविद्यालयभवने तत्रत्यगणिताध्यापकानां श्रीमुरारिलालशर्मएम. ए. ज्यौतिषाचार्याणां सूर्यादिग्रहानभिलक्ष्य भाषणम्, 'एपिडेस्कोप'-साहाय्येन ग्रहसम्बन्धिनां केषांचिच्चित्राणां प्रदर्शनं च संजातम् । श्रीमुरारिलालशर्माण उत्तरप्रदेशीयशासनेन विशेषाध्ययनार्थं मद्रासप्रान्ते कोदइकेनालस्थवेधशालायां विगताश्विनमासे प्रेषिता आसन् ।

---

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]

षष्ठो वर्षः—संवत् २००८

प्रधानसम्पादकः
श्रीत्रिभुवनप्रसाद उपाध्यायः
एम० ए०, व्याकरणाचार्यः

सहायकसम्पादकः
श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः

# वार्षिकविषयसूची


| | | |
|---|---|---|
| अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम् ( सावशेषम् ) | डा. वासुदेवशरणोऽग्रवालः एम. ए. । | ३३६ |
| अदृष्टसिद्धिः | श्रीकेशवद्विवेदी न्यायाचार्यः । | १२ |
| अभिधर्मवस्तुकथा ( सावशेषम् ) | भदन्तशान्तिभिक्षुः शान्तिनिकेतनस्थः । | २५३ |
| अष्टाध्यायीप्रकरणक्रमालोचनम् | श्रीरामशंकरभट्टाचार्यः शास्त्री । | २२०,३६४ |
| ऐतरेयारण्यकपर्यालोचनम् ( सावशेषम् ) | डा. मङ्गलदेवशास्त्री एम. ए., डी. फिल्. । | २४५ |
| कल्पनाविलासः | श्रीमहादेवशास्त्रिपाण्डेयः साहित्याचार्यः । | २७७ |
| किं निबन्धना पुण्यपापयोर्व्यवस्था | श्रीचारुदेवशास्त्री एम. ए., एम. ओ. एल्. । | २११ |
| गीर्वाणवाण्या गौरवम् | श्रीत्रिभुवनप्रसाद उपाध्यायः एम. ए. व्याकरणाचार्यः । | ३४४ |
| ग्रहस्पष्टीकरणोपयोगीनि मण्डलानि | श्रीचन्द्रभानुपाण्डेयो ज्यौतिषाचार्यः । | ४७ |
| ज्यौतिषशास्त्रस्य सिंहावलोकनम् ( पूर्वतोऽनुवृत्तम् ) | श्रीबलदेवमिश्रो ज्यौतिषाचार्यः । | १८५ |
| दर्शनसाफल्यम् | भदन्तशान्तिभिक्षुः शान्तिनिकेतनस्थः । | १४७ |
| ध्वनिरात्मा काव्यस्य | कुमारी भक्तिसुधादेवी एम. ए. । | २७३ |
| नवीनदर्शनोत्पत्तिः कथं स्यात् | पण्डितराजराजेश्वरशास्त्रिद्राविडः । | ३ |
| पञ्चमोपाधिवितरणोत्सवविवरणम् | | ७१–११० |
| कुलपतिभाषणम् | | ८५ |
| दीक्षान्तभाषणम् | | ९२ |
| पञ्चमोपाधिवितरणोत्सवसप्ताहविवरणम् | | ७३ |
| ललितकलासंमेलनम् | | ८१ ४०५ |
| सभापतिभाषणम् | | १०६ |

परमाणुस्वरूपविषये किंचित् श्रीविभूतिभूषणभट्टाचार्यो न्यायाचार्यः । १६५
प्रतिपच्चन्द्रः ( कविता ) श्रीआनन्दझा न्यायाचार्यः । २४४
प्राकृतं रहस्यम् ( कविता ) ,, ,, २
प्राचीनं नाट्यशास्त्रम् श्रीबलदेव उपाध्यायः एम. ए. साहित्याचार्यः । ३३३
प्रावृट् ( कविता ) श्रीबटुकनाथशास्त्रिखिस्ते साहित्याचार्यः । ११८
बालबोधमिश्राणां जीवनेतिवृत्तम् श्रीभूपनारायणझा व्याकरणाचार्यः । ६३
बौद्धेषु निर्वाणस्वरूपम् ( पूर्वतोऽनुवृत्तम् ) आचार्यनरेन्द्रदेवः । ११६
भारतीयसंस्कृतौ मानवानां स्वव्यक्तित्व-विकासे कियानधिकारः श्रीको.अ.सुब्रह्मण्य अय्यरः एम. ए. । ३२०
भारतीयानां प्राचीनो व्यवहारदर्शनक्रमः डा.सुभद्रझा एम. ए., डी. लिट्. साहित्याचार्यः । २०३, ३१५
भुवश्चलाचलत्वविषये विचारः श्रीबलदेवमिश्रो ज्यौतिषाचार्यः । २६०
रसविमर्शः म.म.श्रीनारायणशास्त्रिखिस्ते साहित्याचार्यः। २६६
लोकसंस्कृतिविकासाय दर्शनभूमिः श्रीजगन्नाथ उपाध्यायो वेदान्ताचार्यः। ३२७
वाल्मीकीयादिकाण्डरहस्यम् श्रीरामाज्ञापाण्डेयो व्याकरणाचार्यः । ५२, ३५२
विलुप्तसंवत्सरादिकालनिर्णयः श्रीसीतारामझा ज्यौतिषाचार्यः । ३०६

विविधम्—
अखिलभारतीयसंस्कृतपरिषदोऽधिवेशनस्य विवरणम् २३८
अस्माकमीक्षणम् १११, ३६८
काशिकराजकीयसंस्कृतमहाविद्यालयाध्यापकानां प्राचीनं निर्णयपत्रम् ३६६
संस्कृतसमाचाराः ११४, २४०, ४००
व्यञ्जनाविलासः श्रीमुकुन्दशास्त्रिखिस्ते साहित्याचार्यः । २६६
शाब्दतत्त्वविमर्शः श्रीमुरलीधरमिश्रो व्याकरणाचार्यः । १६५
श्रुतिनिरूपणः १, ११७, २४३
संस्कृतज्ञैरद्य किं कार्यम् श्रीप्रकाशचन्द्रगौडः एम. ए. व्याकरणाचार्यः । ३८०

| | | |
|---|---|---|
| संस्कृतपाठशालानां दशा | श्रीमुरलीधर उपाध्यायः एम. ए. व्याकरणाचार्यः। | ३८४ |
| समवायसम्बन्धसाधनम् | श्रीराजनारायणशुक्लो न्यायाचार्यः। | ३९ |
| सम्पादकीयम्— | | |
| कामशास्त्रगर्हा | | २३६ |
| नवयुगारम्भः | | २२९ |
| पारसीकदेशे संस्कृताध्ययनस्यापूर्वः समारम्भः | | ३८९ |
| प्राच्यविद्यामहासंमेलनम् | | ३९१ |
| मिथिलामगधविद्यापीठयोः स्थापना | | ३९४ |
| विमर्शगोष्ठी चलचित्रप्रदर्शनं च | | ११६ |
| संस्कृतपरीक्षाणां मान्यताघोषणा | | ३८६ |
| संस्कृतविश्वपरिषदः स्थापना | | २३२ |
| सोमनाथमन्दिरस्य पुनःप्रतिष्ठा | | २३५ |
| सांख्यमतविमर्शः | श्रीरघुनाथशर्मा व्याकरणाचार्यः। | १९ |
| सांख्यसम्प्रदायान्वेषणम् | श्रीवैद्यनाथशास्त्री पंचवटी, नासिक। | १३९ |
| हैमसमाधिः | सौ.क्षमाबाईराव, बम्बई। | २८० |

